1

1

प्रमिताक्षरासहितमुहूर्तचिंतामणिपुस्तकमिदम्

टी० श्रीगणेशायनमः कैलासेपूर्णेणांकाहिमकररुचिरेवीक्ष्यविंबंस्वकीयंभूयोभूयोपिधावन्प्रतिभटकरटिस्पर्धयाचंडमुंडः माधावत्वंत्वदंघ्रिप्रहरतिभिरतोधूयतेसौधरित्री
मु० त्र्यंबावाग्भिर्निरुद्धःकपटकरटिनःकेलयोनःपुनंतु १ मुहूर्त्तचिंतामणिसंज्ञकस्यस्वयंकृतस्यप्रमिताक्षराख्यं रामोविधत्तेविवृतिंप्रणम्यविघ्नेश्वरंरुद्रान्पितरौगु
रूंश्च २ प्रारिप्सितस्यग्रंथस्यनिर्विघ्नपरिसमाप्त्यर्थंशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकंस्वाभीष्टगणेशदेवताशीर्वादरूपंमंगलमिंद्रवज्रयोपनिबध्नाति गौरी
श्रवइति द्विपस्यगजस्यआस्यंमुखंयस्येतिद्विपास्योगणेशोविघ्नंहरतुनाशयतु युष्माकमितिशेषः कीदृशोगणेशः गौरीश्रवःकेतकपत्रभंगंहस्तेनाकृष्यमुखा
ग्रेदधत् गौरीपार्वतीतस्याःश्रवणयोःस्थितंकेतक्याःपुष्पंकेतकंतस्यपत्रंपर्णंतस्यभंगंखंडंहस्तेनशुंडादंडेनाकृष्यहठाद्गृहीत्वास्वमुखाग्रेस्वमुखैकदेशेदधातिस्थापय

श्रीगणेशायनमः गौरीश्रवःकेतकपत्रभंगमाकृष्यहस्तेनददन्मुखाग्रे विघ्नंमुहूर्त्ताकलितद्वितीयदंतप्ररोहो
हरतुद्विपास्यः १ क्रियाकलापप्रतिपत्तिहेतुंसंक्षिप्तसारार्थविलासगर्भं अनंतदैवज्ञसुतःसरामोमुहूर्त्तचिंताम
णिमातनोति २

तीतिदधत् अनेनगणेशस्यबाललीलासूचिताबालोपिमातृसमीपवर्त्तियत्किंचित्स्वैरंवस्तुबलात्कारेणगृहीत्वामुखेनिक्षिपतीति अतएवमुहूर्त्ताकलितद्वितीय
दंतप्ररोहः मुहूर्त्तंक्षणमात्रंआकलितोनिःसृतोद्वितीयदंतप्ररोहोद्वितीयदंतोद्गमोयेनसः अनेनकेतकपत्रस्यमुखस्थापनसमयेयावन्निगरणंनकरोतितावद्गणे
शोद्विदंतएवालोकिकैरित्यभूतोपमेयं १ अथज्योतिषग्रंथमारभमाणोविषयप्रयोजनसंबंधाधिकारिणःसूचयन् कर्त्तव्यंउपजातिकयाप्रतिजानीते क्रियाकला
पेति अनंताख्यज्योतिर्वित्पुत्रःसःप्रसिद्धःरामोमुहूर्त्तचिंतामणिंमुहूर्त्तानांदिनशुद्धिविशेषणोलक्षणायातदुपलक्षितःकालोमुहूर्त्तशब्देनोच्यते तस्यचिंताशुद्धा रामः
शुद्धिःसैवमणिरिवमुहूर्त्तचिंतामणिंज्योतिषग्रंथमातनोति विशेषतोनानाधारस्थापमपियंथोनिखिलमुहूर्त्तानामाधारइत्यन्वर्थनामानंमुहूर्त्तचिंतामणिं १

2

मु॰टी॰
मु॰पृ॰
२

तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्। यथा शिखा मयूराणां नागानां मणयो यथा तद्वद्वेदांगशास्त्राणां गणितं मूर्धनि स्थितं तस्मा
त्सर्वोपयोगिकतयाऽवश्यमध्येतव्यं ज्योतिःशास्त्रं तच्च सुपरीक्षितशिष्याय देयं नेदं नास्तिकाय विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि असू
यकायानृजवेऽहिताय न मां ब्रूया वीर्यवती यथा स्याम् अन्यच्च नेनेदं दुर्विनीताय जातु ज्ञानं गुणं तद्धि सम्यक् फलाय अस्थाने हि स्थाप्यमानैव वाचां देवी को
पान्निर्दहेत्तं विनय विना यावता यदीयमानं भस्म भवेत्कलेन व सत्फलाय उपकृत्य नुचितकानि शास्त्राण्युपकारस्य पदं हि साधु खेति अद्य पादे च महान्दो
षः गर्गः स्नेहाल्लोभाच्च मोहाच्च यो विप्रोऽज्ञानतोऽपि वा शूद्राणामुपदेशं तु दद्यात्स नरकं व्रजेदिति ज्योतिःशास्त्राध्ययने फलमाह मांडव्यः एवं विधस्य तु
तिनेत्र शास्त्रस्य रूपमर्तुः खलु दर्शनं वै निहत्य शोषं कलुषं जनानां ... धर्मसुखास्पदं स्यात् अत्र ज्ञानविशेषेण ज्योतिर्विदः स्वजातास्तस्मञ्जीरो
स्यधापि दश दिनकृतपापं हन्ति सिद्धांतवेत्ता त्रिदिनजनितदोषं तंत्रविशिष्ट एव करणभगणवेत्ता हंत्यहोरात्रदोषं जनयति घनमंहस्तत्र नक्षत्रसूची
नक्षत्रसूचीलक्षणं वराहसंहितायां अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते स पंक्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः तिथ्युत्पत्तिं न जानंति ग्रहाणां।
नैव साधनं पराशयेन वर्तंते ते वै नक्षत्रसूचकाः नक्षत्रं सूचयतीति नक्षत्रसूची नक्षत्रसूचको हि समुपवासं करोति यः स व्रजत्यंधतामिस्रं सार्धं नक्ष
त्रविदं विना नक्षत्रजीविनं पापं मिषजं शुल्कजीविनं नाहूय पौरणिकादींश्च वाग्मात्रेणापि नार्चयेत् नक्षत्रविदं विना नक्षत्रसूचकेन सहांधतामिस्रं
नरकं व्रजति अतश्चापयथाशास्त्रमादेशका एव नक्षत्रसूचकाः ननु संपूर्णशास्त्रपरिज्ञानाद्दैवज्ञत्वं प्रपद्यत इत्युक्तत्वात् एवं कर्मार्जितसदसत्कर्मवि
पाको दैवं न ज्ञानातीति दैवज्ञः तत्प्रभावो दैवज्ञत्वं गुरुः दैवज्ञैः शास्त्रतत्त्वज्ञैर्मुहूर्तो न्विष्यते यदि सन्मुहूर्तः समन्वेष्यो नान्येन नक्षत्रसूचकैरिति अत
एव कश्यपो वेदपारगसाहित्येनैव नक्षत्रसूचकस्य श्राद्धभोजनमाह अरिविघ्नं भहंता च व्यंगो नक्षत्रसूचकः काणः कुंठश्च मंदश्च श्वित्री सूचकः कुनखवा
न् सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैरिति वशिष्ठः त्रिसंधपारगमेव पूज्यः श्राद्धे सदा सत्सु रवंदमध्ये नक्षत्रसूची खलु पापरूपो हेयः सदास राम:
वे सुधर्मकृत्ये वा राहोपि सांवत्सरिके देशे वसन् वंभूतिमिच्छन् वत्सुर्यो हि पत्रेषुः पापं तत्तन्न विघ्नते मुहूर्तो निषि नक्षत्रपतवश्वापनानि च। सर्वाण्ये २



2

ज्योतिषग्रंथमातनोति निषेधविध्यादिसंनिवेशविशेषेण निरूपयतीत्यर्थः ननु जीर्णग्रंथैरेव मुहूर्तविचारे सिद्धे किमनेनेत्यत आह कीदृशं मुहूर्तचिंतामणिं क्रियाक
लापप्रतिपत्तिहेतुं क्रिया जातकर्मादिका तासां कलापः समूहः तस्य अमुकस्मिन् शुभदिने कार्यमेतदस्मिन्नशुभदिने कार्यमित्येवंरूपा हृत्ततरप्रतिपत्तिः सम्यक्ज्ञा
नं तस्य हेतुं कारणं अयमर्थः अन्यग्रंथेषु तिथ्यादिशुद्धिरुक्ता ततस्तानं तत्तत्प्रकरणानां पुनः पुनरालोडनेन सिध्येदिति गौरवं अत्र त्वेकस्मिन्नेव पद्ये यो मुहूर्तो वि
धार्यते तस्य तत्रैव निर्वाह इति लाघवं नन्वन्येष्वपि ग्रंथेष्वेवं विधमुहूर्तनिरूपणान्व्यर्थोयं श्रम इत्यत आह पुनः कीदृशं मुहूर्तचिंतामणिं संक्षिप्तसारार्थविलासग
र्भं संक्षिप्तश्चासौ सारार्थविलासगर्भं विक्लिष्टार्थस्तस्य विलासः प्रकाशः सगर्भे यस्यासौ अत्र शब्दलाघवे विक्लिष्टार्थस्य निरूपणाद्यथा गुरुमुखं विनैवार्थज्ञानं
सद्यो मनसि जागर्ति तथा नान्यग्रंथेषु तत्र शब्दकाठिन्याद्गुरुमुखादपि झटित्यर्थज्ञानं न भवतीत्येतदर्थमस्यारंभ इति ननु संबंधादिचतुष्टयकथनं विना कथं श्रोतृप्रवृ
त्तिः उक्तं च सिद्धिः श्रोतृप्रवृत्तीनां संबंधकथनाद्यतः। तस्मात्सर्वेषु शास्त्रेषु संबंधः पूर्वमुच्यते किमेवान्नाभिधेयं स्यादिति पृच्छत्सु केनचित् यावत्प्रयोजनं नोक्तं ता
वत्तत्केन गृह्यते इति उच्यते मुहूर्तचिंतामणिमित्यनेनैव पदेनैव सर्वं सूचितं तथा च नारदः अस्य शास्त्रस्य संबंधो वेदांगमिति धातृजः इति यद्वान्नाभिधेयपदार्था
नां मुहूर्तानां ग्रंथस्य च प्रतिपाद्यप्रतिपादकभावः संबंधः प्रयोजनं तु शुभाशुभनिरूपणं विवाहादिकालनिर्णयश्च यदाह नारदः प्रयोजनं च जगतः शुभाशुभ
निरूपणमिति कश्यपोपि ग्रहणग्रहसंक्रांतियज्ञाध्ययनकर्मणां प्रयोजनं व्रतोद्वाहक्रियाणां कालनिर्णय इति तज्जिज्ञासुरधिकारी स च द्विज एव नान्यः उ
क्तं च नारदेन सिद्धांतसंहिताहोरारूपस्कंधत्रयात्मकं वेदस्य निर्मलं चक्षुः ज्योतिःशास्त्रमकल्मषं विनैतदखिलं श्रौतस्मार्तं कर्म न सिध्यति तस्माज्जगद्धि
तायेदं ब्रह्मणा निर्मितं पुरा अत एव द्विजैरेतदध्येतव्यं प्रयत्नतः अत्रैवकारस्य पाठक्रमेणायोजने प्रयोजनं विनैव ज्योतिःशास्त्राध्ययनस्यावश्यकत्वं प्रतीय
ते द्विजैरेवेति व्याख्याने द्विजव्यतिरिक्तैः शूद्रैर्नाध्येयमिति च प्रतीयते व्याख्यानद्वयमपि युक्तमेव ननु कथं श्रौतस्मार्तकर्मोपयोगि ज्योतिषमिति चेत् उ
च्यते अष्टवर्षं ब्राह्मणमुपनयीत वसंते ब्राह्मणोग्नीनादधीत दर्शपौर्णमासाभ्यां यजेतेत्यादिश्रुतयः संति तत्र वर्षादिज्ञानं वसंतादिज्ञानं दर्शपूर्णमासयो
र्ज्ञानं च ज्योतिषं विना सर्वथा न निर्वहतीत्यवश्यमध्येतव्यं ज्योतिःशास्त्रं उक्तं च वेदांगज्योतिषे वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः

मु०टी० यस्मात्कर्म जन्मांतरोपार्जितं कर्मैव दैवरूपं तस्य विधीयमानं अधुना क्रियमाणं कर्म शोषाय च भवति किंवद्वीजं सलिलानिलोर्वीसंस्कारवत्। यथा स
पृ०अ० द्बीजं शुभे सलिलादिसंस्कारैः संस्कृतं सदुदेति वर्धते च तद्वत्स्मात्कर्मापि पुरुषेहि केन सत्प्रयत्नेन वर्धते अन्यथा क्षीयत इत्यर्थः तस्मात्ज्योतिःशास्त्रवि
३ हितकाले विवाहादिकु वेता शांतिचिकित्सादिसदाचारवतां पुरुषाणां सदा न हानिः स्यात् अन्यच्च दैवं हि पुरुषनिघ्नं तद्देशकालवशत एव विपच्य
ते उत्तमपि दुष्टांतरसाहित्येनैनद्दुष्टकारि भवति यथा दुर्जनो रोधान्वेषणेन अत एव वसंतराजः सर्पवह्निविषकंटकादिकं येन दैवशरणोऽपि मा
नवः दूरतस्त्यजयति पौरुषं तदानेन न स्फुरति दैवतोऽधिकं पौरुषेण हृदये क्षितां गतिं प्राप्नुवंति पुरुषाः सुमेधसः यांति दैवशरणालयं यथा पादपा
ज्वलति दावपावकेरिति। अतः शाकुनलिमित्तादिभिः सूचितमशुभे दैवफलं शुभेन प्रयत्नेन वंश्यत एव तथा च वसंतराजः तन्निरूप्य शकुनेन दुः
3 खदं वंचयंति नियतं समुद्यतं पौरुषेण पुरुषाः सुमेधसः संश्रयं निपुणमात्मनो हितमिति तद्दैवफलं दुःखं समुद्यतं शकुनेन निरूप्य शाता पुरुषाः
पौरुषेणावंचयंतीत्यर्थः यथा येन ग्रहेण यावती दशांतर्दशा वा दत्ता तस्याः फलपरिपाकः तावंतं कालमभिव्याप्य भवेदेवेति स्थिते दशाप्रवेशकाली
न चंद्राद्युक्तशुभाशुभफलनिरूपणं यथा तस्य दशाफलस्यान्यथात्वमल्पत्वमाधिक्यं वा बोधयति तद्वदेतदपि बोद्धव्यं नन्वनंतरोक्तसर्पविषवधा
दिदृष्टांतेन पौरुषमेव फलसाधनं कथं न स्यात् तथा च बृहद्यात्रायां वराहः तथापरे तपेस्यैव दैवं धैर्योविलंबिनः प्रत्यक्षतः क्रियासिद्धौ केवलं प्रपु
रुषमं उत्थानहीनो राजा हि बुद्धिमानपि सर्वदा प्रधर्षणीयः शत्रूणां भुजंग इव निर्विषः विषाणगणनाज्जडः पुरुषकारमुक्तादरोमनोरथपरि
श्रमैनं परितुष्टं निश्रीसुखपराक्रमविनिश्चितैकसुनयो हि यत्नः कृतं हरिर्मदसुवासितं पिबति कुंजरासृक्क्रमं इत्यादि उच्यते समानभूमिषुस
मानसलिलादिप्रयत्नेपि फलवैचित्र्यदर्शनात् कारणांतरं कल्प्यते तद्दैवदैवमिति अत उभयोर्योगे सत्येव फलसिद्धिरिति एतदपि तत्रैव कृषिदृष्टि
समायोगादृश्यंते फलसिद्धयः अस्मिन्नर्थे शृणु श्लोकान्द्वैपायनमुखोद्गतान् कृषिः पौरुषं वर्षं दैवं कर्षकः पौरुषेण कृषिं करोति तां दैवं वर्षयित्वा सा
धयति अथ कृषिं करोति वेन दारुष्या विना न किंचित्फलमाप्नोति यदि पुनः कर्षको बीजं वपति दैवं च वर्षति तदा फलमधिकमुत्पद्यते एवं दैव राम: ३

वाकुलानि स्युर्नेस्यात्सांवत्सरोपदि। अतो गणकानां यदपांक्तेयत्वमभ्यधायि धर्मशास्त्रेण तत्सूचकाभिप्रायेण ज्ञेयं महाप्रयोजनं तु एतच्छास्त्रस्य सम्यक्ज्ञा
नाद्ब्रह्मसायुज्यमिति तथा च गर्गः ज्योतिश्चक्रे तु लोकस्य सर्वस्योक्तं शुभाशुभं ज्योतिर्ज्ञानं तु यो वेद स याति परमां गतिं सूर्यसिद्धान्ते दिव्यं चक्षुर्ग्रहाणां तु
दर्शितं ज्ञानमुत्तमं विज्ञायार्कादिलोकेषु स्थानं प्राप्नोति शाश्वतं वराहः नसांवत्सरपाठी च नरके परिपच्यते ब्रह्मलोकप्रतिष्ठां च लभते दैवचिंतक इति
तस्माज्ज्योतिःशास्त्रमवश्यमध्येतव्यमिति स्थितं तत्राप्यार्षवाक्यतां पाठमात्रेणापि फलमस्ति स्मृत्यादिपठनवदिति अथ मुहूर्तप्रयोजनमाह सत्याचा
र्यः शुभक्षणक्रियारंभजनितापूर्वसंभवाः संपदः सर्वलोकानां ज्योतिस्तत्त्वप्रयोजनमिति तेन शुभमुहूर्तारब्धं कार्यं सिध्येदशुभमुहूर्तारब्धं तु न सि
ध्येदिति तन्नयुज्यते येन तु यत्प्राप्तव्यं तस्य विपाके तु सोमरचितोपि यः साक्षात्त्रिपतिज्ञः सोपि न शक्तोन्यथाकर्तुमिति शौनकोक्तेः प्राचीनसदसत्कर्मरूपदैव
स्यावश्यंभावित्वादिति चेत् न विवाहादिविवाहादिषु विहितकालस्य पुरुषप्रयत्नसाध्यत्वादुभययोगे सत्येव कार्यसिद्धिर्न केवलं दैवेनेति तदुक्तं केशवार्के
ण फलेद्यदि शास्त्रजन्मेव तन्किं कृष्याद्युपायेषु परः प्रयत्नः श्रुतिः स्मृतिश्चापि नृणां निषेधविध्यात्मके कर्मणि किं निषण्णेति यदि तु दैवमेव फलेत्तदा सर्वो
जनः कृष्याद्युपायेषु कथं प्रवर्ततेति किंच श्रुतिस्मृत्यादयोपि निषेधविध्यात्मकानि रथ्यकाः स्युः न च स्वमारोहेन्न बाहुभ्यां नदीं तरेन्न संशयमापद्यते
त्यादीनां आश्वलायनादिवचनानां चिकित्साशास्त्रस्य च वैयर्थ्यप्रसंगः स्यादित्यर्थः याज्ञवल्क्योपि दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता तत्र दै
वमभिव्यक्तं पौरुषं पौर्वदेहिकमिति कर्मसिद्धिः फलावाप्तिरिष्टानिष्टाचलक्षणा सा च केवलदैवेन व्यवस्थिता अपि तु पुरुषकारेपि पुरुषकारः
प्रयत्नः पुरुषकाराभावे दैवमेव नास्तीत्याह तत्र दैवमिति पूर्वदेहार्जितं पौरुषमेव दैवमित्युच्यते तच्चाल्पपुरुषप्रयत्नानंतरं महाफलोदयेन अ
भिव्यक्तं भवति अतएव वसंतराजः पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते उद्यमेन समुपार्जितं तदा वांछितं फलति नैव केवलमिति
दैवप्रयत्नयोरन्यतरेण सिद्धिर्न भवतीत्यत्र दृष्टांतमाह याज्ञवल्क्यः यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् तद्वत्पुरुषकारेण विना दैवं न सिध्य
ति केशवार्कोपि प्राक्कर्मबीजं सलिलान्नलोभीसं [illegible] नस्यात्सदा चारवतां न हानिरिति

मु०टी० नहिदेयंपंडितेनदैवविदा अथयोंबुनिधौमज्जतिशास्त्रमविज्ञायययोद्याद्रिति बृहस्पतिरपीदंप्रत्याहस्वभावाद्देवकालोयंशुभाशुभसमन्वितः अना
मु०प्र० द्यनिधनःसर्वोननिर्दोषोननिर्गुणः तस्मान्निर्दोषकालार्थंमुहूर्तमधिगच्छतां कालःशुभोगुणैर्युक्तोबलवद्भिःशुभप्रदः दोषैर्युक्तोपिचाप्राणैर्ब
४ हुभिर्वर्ज्यत्ययंह्यशुभोरिति अतःशुभमुहूर्तबलेनपूर्वकर्मार्जितमशुभमपिदैवफलंनिवार्यते इत्यर्थः २ अथतिथीशाननुष्टुभाह तिथीशाइति एते
तिथीशाः तिथीनांस्वामिनः वह्निश्चकश्चकोब्रह्मा शेषंस्पष्टं प्रयोजनंतुतत्तद्दैवतापूजाप्रतिष्ठादि अथमुहूर्तविचारस्यप्रतिज्ञातत्वात्तत्तत्स्वरूपादि
कथनंनोक्तंततएवावधार्यं ३ अथतिथीनांसंज्ञासफलाह नंदेति नंदेतिप्रतिपदादियंचतिथयोनंदाभद्राजयारिक्तापूर्णासंज्ञाः स्वस्वनाम

4

तिथीशावह्निकौगौरीगणेशोऽहिर्गुहोरविः शिवोदुर्गांतकोविश्वेहरिःकामःशिवःशशी ३ नंदाचभद्राचजयाच
रिक्तापूर्णेतितिथ्योऽशुभमध्यशस्ताः सितेऽसितेशस्तसमाधमाःस्युःसितज्ञभौमार्किगुरौचसिद्धाः ४ नंदा
भद्रानंदिकाख्याजयाचरिक्ताभद्रापूर्णासंज्ञाऽधमार्कात् ॥

सदृशफलदाःस्युः इति एवंप्रकारेणसर्वाःषष्ठ्यादयोज्ञेयाः ताःशुक्लपक्षेऽशुभमध्यमशुभफलदाःस्युः असितेकृष्णपक्षेशुभमध्यमाधमाफलदाः
स्युः ताएवनंदादितिथयः शुक्रबुधमंगलशनिगुरुवारेषुसिद्धिकराःस्युः यथानंदाशुक्रवारे एवंभद्राबुधवारे जयाभौमे रिक्ताशनौ पूर्णागुरौइ
ति ४ अथसूर्यादिवारेषुयथासंख्यंनिषिद्धतिथीश्चनक्षत्राणिचशालिन्याहनंदेति अर्कादितिल्यप्लोपेपंचमी अर्कमारभ्यनंदादिकातिथि
रधमास्यात् यथासूर्यवारेनंदाधमा एवंसोमेभद्रा भौमेनंदा बुधेजया गुरौरिक्ता शुक्रेभद्रा शनौपूर्णेति इदमाधुनिकानां प्राच्यानांमतंवस्तु राम:
४

पुरुषकारयोः समयोर्यत्फलसिद्ध्योर्दृश्यते अत्रार्थे श्रीव्याससुखोद्गताऽमे श्लोकाः नविनामानुषं दैवाद्दैवं वा मानुषाद्विना नैको निवर्तयत्यर्थमेको
रणिद्विनानलमिति केचिद्बुद्धिः कर्मानुसारिणीतिमन्यमानाः प्रयत्नोपि दैवरूपऽनिकृत्वाद्दैवमेवफलसिद्धेः कारणमिति वदंति तन्न। अनवस्था
दोषप्रसंगात् तथाहि प्राक्कर्मार्जितं पौरुषमेव किल दैवशब्देनोच्यते। अत्र तत् प्रयत्नः प्राचीनपौरुष लक्षणेन दैवेन जन्यते तदपि तत्प्राचीन
पौरुषजन्यमित्यनवस्थाऽतः प्रयत्नोपि दैवप्रेरितइत्यनुपपन्नं नेतु बीजांकुरन्यायेनानवस्थादोषो न भविष्यतीति चेत्तन्न हि बीजांकुरन्यायेन दैवमे
वफलमिति निश्चीयते नापि प्रयत्नः अतः सत्युभययोगे फलसिद्धिरिति तत्त्वं एवं चेत्तर्हि पूर्वोक्तानां शौनकादिवाक्यानां येन तु यन्माप्तव्यं तस्य।
विपाके सुरेशसचिवोपि यः साक्षात्त्रियतिजः सोपि न शक्तोऽन्यथा कर्तुमित्यादिकानां का गतिः उच्यते दैवं तु दृढकर्मजं चेति द्विविधं तत्र दृढकर्म
जस्यावश्यंभावित्वाद्बृहस्पत्यादिरूपेण पूर्वेण प्रयत्नादपि तन्निवारयितुं न शक्यते दृढमूलत्वात्। प्रबलवाताघातेपि दृढमूलपादपवत् अदृढक
र्मजं तु दैवं प्रयत्नेन निवर्त्यं प्रतिशिथिलमूलपादपवत् तथा च जातके ये धर्मकर्मनिरता विजितेन्द्रिया ये पथ्यभोजनजुषो द्विजदेवभक्ताः। लोके
न एव ये कुलशीललीलां तेषां मिदं कथितमायुरुदारधीभिरिति। प्रयत्नाभावे तु विपद्यते तथा च तत्रैव पापिष्ठा ये दुराचारा देवब्राह्मणनिंद
काः अपथ्यभोजिनस्तेषामकालमरणं ध्रुवमिति वैद्यकेपि पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते इति सर्वव्याधीनां साधारण्येन कर्मजत्वेपि साध्या
साध्यत्वेन द्वैविध्यं तत्रापि कृच्छ्रोपायः सुखोपायो द्विविधः साध्य उच्यते असाध्यो द्विविधो ज्ञेयो साध्यो यश्चाप्रतिक्रियः साध्या याप्यत्वमायांति
याप्याश्चासाध्यतां तथा घ्नंति प्राणान्न साध्यास्तु नराणामक्रियावतामित्यादिना चिकित्स्यव्याधेरदृढमूलत्वमन्येषामदृढकर्ममूलत्वं निश्चीयते
अतो दैवस्येदृशं द्वैविध्यमस्ति अतः शौनकवाक्यानामयमर्थः येन त्विति येन पुरुषेण यत्प्राप्तव्यं अवश्यंभोक्तव्यं दृढकर्मोपार्जितमिति यावत् तदन्य
थाकर्तुं बृहस्पतिरपि न शक्तः अर्थादन्यददृढकर्मोपार्जितमन्यथाकर्तुं शक्त इत्यर्थः अतो निमित्तशकुनादिभिर्दुष्टफले ज्ञाते बौधायनादिविहिते
न तत्कांतिदानादिरूपधर्मेण प्रयत्नेन तन्निवर्त्यते प्रथमं वर्ण्यते अत एवात्रैवोक्तं सुपरीक्षितं विलग्नं धर्मार्थसुखाय दंपत्योः अपरीक्षितं विलग्नं

मु० टी०
शु० प्र०
५

स्त्रोरपि निषेधः काशीखंडे प्रतिपद्दशमीषष्ठीनवम्यां रविवासरे दंतानां काष्ठसंयोगो दहेदासप्तमं कुलमिति ६ अथ कृत्यविशेषेषु निषिद्धतिथिरिंद्र
वेदाभ्यां ह्रस्वाह षष्ठ्यष्टमीति षष्ठ्यष्टम्यौ प्रसिद्धे भूतश्चतुर्दशी विधुक्षयो मावास्या एतासु तिथिषु नापुरुषः तैलं पलं मांसं क्षुरं क्षौरं रतं मैथुनं नो से
वेत यथा षष्ठ्यां तैलं अष्टम्यां मांसं चतुर्दश्यां क्षौरं अमावस्यायां मैथुनं न सेवेतेत्यर्थः विधुक्षयः सर्वोपलक्षकः वसिष्ठः स्त्रीसेवनं पर्वसु पक्षम
ध्ये पलं च षष्ठीषु च सर्वे तैलं नृणां विनाशाय चतुर्दशीषु क्षुरक्रिया स्यात्सकृज्जदास्तु नारदः व्यतीपाते च संक्रांतावेकादश्यां च पर्वसु अर्कभौमदि
ने विष्ण्यां नाभ्यंगं न च वैधृताविति पर्वाणि वसिष्ठ आह चतुर्दश्यष्टमी कृष्णा अमावास्या च पूर्णिमा पुण्यानि पंच पर्वाणि संक्रांतिर्दिनयस्य चेति।
अत्र तिथिस्तात्कालिकी ग्राह्या उक्तं च स्नाने वाभ्यंजने चैव दंतधावनमैथुने तिथिस्तात्कालिकी ग्राह्या न तथा मरणजन्मनोरिति अथ विश्वेत्रयोद
षष्ठ्यष्टमीभूतविधुक्षयेषु नो सेवेत ना तैलपलक्षुरं रतं नाभ्यंजनं विश्वदशाद्विके तिथौ धात्रीफलैः स्ना
नममाद्रिगोष्ठसत् ७ सूर्येशपंचाग्निरसाष्टनंदा वेदांगसप्ताश्विगजांकशैलाः ॥
शादशमी द्विके द्वितीया एतासु तिथिषु अभ्यंजनं अभ्यंगं मलापहारं च न सेवेत अयं निषेधो ब्राह्मणव्यतिरिक्तस्तथा च भट्टभास्करो निर्णयामृते त्रयो
दश्यां द्वितीयायां सप्तम्यां च विशेषतः शूद्रविट्क्षत्रियाः स्नानं नाचरेयुः कदाचनेति अथ धात्रीफलैरामलकैः स्नानममाद्रिगोषु अमावस्यासप्तमी
नवमीषु असत् निषिद्धमित्यर्थः अत्र वसिष्ठादिमते त्रयोदश्या द्वितिथिषु आमलकस्नानस्यैव निषिद्धो नाभ्यंगस्य वसिष्ठः कामदुर्गांतकरं विनयं
दर्कदिनेषु च सकृदामलकस्नानं संपत्पुत्रविनाशनं भट्टभास्करस्तु नवम्यादिष्वेवामलकस्नानं निषेधति सप्तम्यं चंद्रानवमीषु देहश्री संततीरम
लकैर्न रस्य स्नानं निहन्त्यन्यदिने तु धत्ते तिलैः श्रियं पुण्यकरं स दैवेति ७ अथ सूर्यादिवारेषु दग्धादियोगचतुष्टयमिंद्रवज्रोपजातिकाभ्यामाह
सूर्येति सूर्यादीनि सूर्येशपंचाग्निरसाष्टनंदाः तिथयः सूर्यादिवारे दग्धसंज्ञा भवंति यथा द्वादशी रविवारे दग्धा सोमे एकादशी भौमे पंचमी बुधे
रामः
५

तत्सुते शुभाः अमृतयोगाः तथा च वसिष्ठः नंदा भौमार्कयोर्भद्रा शुक्रेन्द्वोरथ जया बुधे शुभयोगा गुरौ रिक्ता पूर्णा मंदेऽमृताह्वया गुरुरपि आदित्यभौमयो र्नंदा भद्रा शुक्रशशांकयोः जया त्वस्य गुरौ रिक्ता पूर्णा कीर्त्याऽमृता शुभा इति नारदवाक्ये शनौ पूर्णा च मृत्युदेतिकल्पितपाठः वसिष्ठादिवचनविसंवा दात् बहुपुस्तकेषु शनौ पूर्णाऽमृता शुभे निपाठात्पूर्णसंज्ञाऽमृताकादितिपाठः साधुः तथा रविवारादिषु याम्यं भरणी तदादीनि नक्षत्राणि यथाक्र मेण दग्धनक्षत्राणि स्युः यथा रविवारे भरणी दग्धा सोमे चित्रा। भौमे उत्तराषाढा बुधे धनिष्ठा गुरावुत्तराफाल्गुनी शुक्रे ज्येष्ठा शनौ रेवती नारदः आ दित्यभौमयोर्नंदा भद्रा शुक्रशशांकयोः जया सौम्ये गुरौ रिक्ता शनौ पूर्णाऽमृता शुभाऽइति नारदः यमर्क्षमर्कवारे जे चित्रा भौमे तु विश्वभं बुधे श्रवि ष्ठार्यमर्क्षं गुरौ ज्येष्ठाऽऽगोर्दिने रेवती शनिवारे तु दग्धयोगा भवंत्यमी एतान्येव नक्षत्राणि रव्यादीनां जन्मभानीत्युक्तानि तान्यपि निषिद्धान्येः

याम्यं त्वाष्ट्रं वैश्वदेवं धनिष्ठार्यमणं ज्येष्ठांत्यं रवेर्दग्धभं स्यात् ५ षष्ठ्यादितिथयो मंदाद्विलोमं प्रतिपद्
बुधे सप्तम्यर्केऽधमाः षष्ठ्याद्या माश्वरद्क्षावने ६ ॥ ॥ ॥

वल्लभः याम्यं त्वाष्ट्रोत्तराषाढे धनिष्ठोत्तरफाल्गुनी ज्येष्ठा च रेवती चैव जन्मर्क्षी भानुतः क्रमात् क्रमात्सप्तेंद्रदशसूर्येन वाष्टौ पौर्णिमास्यमा ७।१०।१२।६।८ १५ ३० सूर्यादिजन्मतिथयः संत्याज्याः शुभकर्मणि जन्मर्क्षे जन्मतिथिषु शुभकर्म विवर्जयेत् बलाच्चेत्कुरुते कर्म न तत्फलमवाप्नुयादिति ५ अथ क्र कचादिनिंद्ययोगानुष्टुभाह षष्ठ्यादीनि क्रमेण षष्ठ्यादितिथयः मंदाच्छनैश्चराद्विलोमं विपरीतगणनयाऽधमाः स्युः। यथा शनौ षष्ठी अधमा शुक्रे स प्तमी गुरावष्टमी बुधे नवमी भौमे दशमी सोमे एकादशी रवौ द्वादशी एते योगाः क्रकचाख्या ज्ञेयाः तथा प्रतिपत् बुधवासरे सप्तमी रविवारे संवर्तयो गाऽधमाः स्यात् अथ षष्ठी आद्या प्रतिपत् आमा अमावास्या [illegible] अधमाः निषिद्धाः स्युः कश्चिन्नवमी रविवा

मु॰टी॰ सरांगांब्धयः शराः पंचरुद्रा स्तिथयः शून्या यथा कार्तिककृष्णे पंचमी शून्या एवमाषाढकृष्णे षष्ठी फाल्गुनकृष्णे चतुर्थी ज्येष्ठकृष्णे चतुर्दशी माघकृष्णे पंच
शु॰प्र॰ मी अथैषामेव कार्तिकादिमासानां शुक्लपक्षे शकाग्निविश्वरसाः क्रमाच्छून्याः यथा कार्तिकशुक्ले चतुर्दशी शून्या आषाढशुक्ले सप्तमी फाल्गुन
६ शुक्ले तृतीया ज्येष्ठशुक्ले त्रयोदशी माघशुक्ले षष्ठी चेति वसिष्ठः अष्टमी नवमी चैत्रे पक्षयोरुभयोरपि माधवे द्वादशी त्याज्या पक्षयोरुभयोरपि ज्ये
6 ष्ठे त्रयोदशी निंद्या सिते कृष्णे चतुर्दशी आषाढे कृष्णपक्षस्य षष्ठी शुक्ले तु सप्तमी द्वितीया च तृतीया च श्रावणे सितकृष्णयोः प्रथमा च द्वितीया तु नभ
स्ये मासि निंदिते दशम्येकादशी निंद्या मासीषे शुक्लकृष्णयोः ऊर्जे चतुर्दशी शुक्ला कृष्णपक्षे तु पंचमी सप्तमी चाष्टमी सौम्ये पक्षयोरुभयोरपि पौषे प

गोष्ठे चोभयपक्षगाश्च तिथयः शून्या बुधैः कीर्तिता ऊर्जाषाढतपस्यशुक्रतपसां कृष्णे शरांगाब्धयः १० शक्राः पंच सिते शकाग्नि
विश्वरसाः क्रमात् तथा निंद्यं शुभे सार्पं द्वादश्यां वैश्वमादिमे ११ अनुराधा द्वितीयायां पंचम्यां पित्र्यभं तथा उत्तराषाढ
तृतीयायामेकादश्यां च रोहिणी १२ स्वाती चित्रे त्रयोदश्यां सप्तम्यां हस्तराक्षसे नवम्यां कृत्तिकाष्टम्यां पूभा षष्ठ्यां च रोहिणी

स्ताद्वये चैत्रे चतुर्थी पंचमी तथा माघे तु पंचमी षष्ठी शुक्ले कृष्णे यथाक्रमं तृतीया च चतुर्थी च फाल्गुने सितकृष्णयोः तिथयो मासशून्याख्या वंशवित्तविनाशनाः
आसु श्राद्धं प्रकुर्वीत नैव मंगलमाचरेदिति १० अथ नक्षत्रसंबंधिदोषान्सार्धानुष्टुपद्वयेनाह तथेति अनुराधेति स्वातीति च शुभे कृत्ये द्वादश्यां सार्पं मा।
श्लेषा निंद्या आदिमे प्रतिपदि वैश्वमुत्तराषाढा राक्षसं मूलं लग्नः द्वितीयया चानुराधा उत्तराषाढतृतीयया पंचम्यां च मघायुक्ता चित्रा स्वात्यौ त्रयोदशी प्रति
पद्युत्तराषाढा नवम्यां कृत्तिका यदि सप्तम्यां हस्तामूले च षष्ठ्यां प्रहस्यं भवेद्यदि पूर्वभाद्रपदाष्टम्यामेकादश्यां च रोहिणी द्वादश्यां च यदा श्लेषा त्रयोदश्यां रामः
मघा यदि इत्यादिषु कार्येषु तेषु चेत्या सर्वमासानामगां भुवमिति ११ १२ १३ ६

तृतीया गुरौ षष्ठी शुक्रेऽष्टमी शनौ नवमी उक्तं च नारदेन एकादशी चंद्रवारे द्वादशी चार्कवासरे षष्ठी बृहस्पतिर्वारे तृतीया बुधवासरे अष्टमी शुक्रवारे च नवमी शनिवासरे पंचमी भौमवारे च दग्धयोगाः प्रकीर्तिताः अथ विषयोगाः वेदेति चतुर्थ्यादितिथयः अर्कादिवारेषु विषाख्या भवंति यथा रवौ चतुर्थी विषाख्या चंद्रे षष्ठी भौमे सप्तमी बुधे द्वितीया बुधे भद्रारूपः सिद्धियोगस्तु सप्तमीद्वादश्योः स्मृतितार्थः एवं नवमी शन्यादावपि गुरावष्टमी शुक्रे नवमी शनौ सप्तमी तथा च गुरुः षष्ठी शशांके नवमी च शुक्रे बुधे द्वितीया तपने चतुर्थी जीवेऽष्टमी सौरिकुजे हि सप्तमी योगा विषाख्याः कुलनाशनाः स्युः अथ हुताशनाख्याः सूर्यांगेति द्वादश्यादितिथयः सूर्यादिवारेषु हुताशनाख्याः स्युः वसिष्ठः सप्तषष्ठ्यादितिथयः सोमवारादिभिर्युताः अग्निजिह्वाः सप्तयोगा मंगलेषु विगर्हिताः ८ अथ यमघंटाः मघाविशाखादिनक्षत्राणि रविवारादिषु यमघंटसंज्ञानि स्युः यथा अर्कवारे मघा यम

सूर्यांगसप्तोरगगोदिगीशा दश्यादिविषाख्याश्च हुताशनाश्च ८ सूर्यादिवारे तिथयो भवंति मघाविशाखा शिवमूलवह्निः ब्राह्मं करोऽर्कादियमघंटकाश्च शुभे विवर्ज्या गमने त्ववश्यं ९ भाद्रे चंद्रदृशौ नभस्यनलनेत्रे माधवे द्वादशी पौषे वेदशरा इषे दशशिवा मार्गेऽद्रि

पंटा एवं सोमवारे विशाखादित्यादि गर्गः मघाविशाखान्याद्रीं च मूलमृक्षं च कृत्तिका रोहिणी हस्तमुक्तं कैयमघंटाः क्रमाद्रवेः एते दग्धादियोगाः शुभे विवाहादिकार्ये वर्ज्याः गमने तु यात्रायामवश्यं वर्ज्याः एषामपवादो वसिष्ठेनोक्तः दिवामृत्युप्रदाः पापदोषास्त्वेते न रात्रिषु शुभकार्येषु सतनौ चम वेदापरिवर्जयेदिति आवश्यककृत्यदीपिकायां यमघंटे त्यजेदष्टौ मृत्यौ द्वादशनाडिकाः इति अन्येषां पापयोगानां मध्याह्नात्परतः शुभमिति ९ अथ चैत्रादिमासे शून्यतिथीः शार्दूलविक्रीडितेनाहोनुष्टुभा वाह भाद्रे इति शक्राग्नि च भाद्रपदादिष्वोकोक्तमासेषु चंद्रदृशौ प्रतिपद्द्वितीये इत्यादि क्रमोक्ता तिथयः उभयपक्षगाः शुक्लकृष्णपक्षगताः शून्यसंज्ञकाः बुधैः कीर्तिताः कथिताः यथा भाद्रपदे प्रतिपद्द्वितीये उभयपक्षे शून्ये एवं नभसि श्रावणे उभयपक्षे तृतीया द्वितीये शून्ये इत्यादि [illegible] दनभस्यशुक्लतपसोः कार्तिकाषाढज्येष्ठफाल्गुनमाघानां कृष्णपक्षे क्रमेण

मु॰टी॰ विवाहप्रकरणोक्तस्यांते जगन्मोहने केंद्रेचैवत्रिकोणेचशुभेस्तूपचयेपिवा एकोपिबलवांश्चापिशून्यतिथ्युडुनाशकः इति १८ १९ अथहस्तार्कादिसि
मु॰प्र॰ द्धियोगानांतिथिविशेषेणातिनिंद्यत्वमनुष्टुप्‌द्वयेनाह वर्जयेद्दिति बुधानुराधामितिच श्रीपतिः हस्तेरवौशशधरेचमृगोत्तमांगंभौमेश्विनीबुध
७ दिनेचतथानुराधा पुष्यो गुरौभृगुसुतेपिचरेवतीस्मधिष्ण्यंरोहिण्यथार्कतनयेऽमृतसिद्धियोगाः एतेपंचम्यादितिथिषुचेद्भवेतितदावर्ज्याः यथापंच
म्यांहस्तार्कौवर्ज्यः एवमग्रेपिषष्ठ्यादौ अन्येउक्तंच अर्केहस्तः पंचमीचसोमेषष्ठीचचंद्रभं अश्विनीसप्तमीभौमेबुधेमैत्रंतथाष्टमी गुरौपुष्यंचनवमी

तिथयोमासशून्याश्चशून्यलग्नानियान्यपि मध्यदेशेपिवर्ज्यानिनदूष्याणीतरेषुतु १८ पंगंधकाणलग्नानिमासशून्याश्च
राशयः गौडमालवयोस्त्याज्या अन्यदेशेनगर्हिताः १९ वर्जयेत्सर्वकार्येषुहस्तार्कंपंचमीतिथौ भौमाश्विनींचसप्तम्यांष
ष्ठ्यांचंद्रेंद्रवंतथा २० बुधानुराधमष्टम्यांदशम्यांभृगुरेवतीं नवम्यांगुरुपुष्यंचैकादश्यांशनिरोहिणीं २१ गृहप्रवेशयात्रा
नायांविवाहेचयथाक्रमं भौमेश्विनीशनौब्राह्मंगुरौपुष्यंविवर्जयेत् २२ आनंदारव्यः कालदंडश्चधूम्रोधातासौम्योध्वां
क्षकेतूक्रमेण श्रीवत्साख्योवज्रकंमुद्गरश्चछत्रंमित्रंमानसंपद्मलुंबौ २३ ॥ रामः॥

दशमीरेवतीभृगौ एकादशीशनौब्राह्मंवर्जयेत्सर्वदाबुधैरिति २० २१ अन्यदप्याह गृहप्रवेशइति ननुभौमाश्विन्यादीनांगृहप्रवेशादौस्वतएव
वारनक्षत्रदोषाद्भावेः किमर्थमिदंवचनं उच्यते यदिविष्टिर्व्यतीपातोदिनंवाप्यशुभंभवेत् हन्यतेऽमृतयोगेनभास्करेणतमोयथेतिवचनात् कार्यमा
त्रामाशंसमाने आवश्यकत्वेप्रवेशादिसंभावनास्यात्तदर्थमपवादवचनंयुक्तमेव २२ अथानंदादियोगान्शालिन्युपजातिकाभ्यामाह आनंदइति रामः
७

अथ चैत्रादिमासेषु शून्यनक्षत्राण्यनुष्टुब्द्वयेनाह कदास्रेति कदास्रभे रोहिण्यश्विन्यौ चैत्रे शून्ये नक्षत्रे एषु शुभकार्यं न कार्यं यतो वित्तविनाशदाः धननाशकरा इत्यर्थः एवं वैशाखे त्वाष्ट्रवायू चित्रास्वात्यौ शून्यभे पाशी वरुणस्तद्भं शततारा अजपात्पूर्वाभाद्रपदा वसिष्ठः अश्विनीरोहिणी चैत्रे शून्यभे परिकीर्तिते चित्रास्वाती च वैशाखे ज्येष्ठे विश्वेज्यतारकौ भगवासवमाषाढे श्रावणे हरिविश्वभे नभस्ये वारुणान्त्यर्क्षमजपादश्च यद्यपि कार्तिकेपि त्वग्न्यृक्षे सौम्ये चित्राहिर्दैवते पौषे दस्रकराद्र्द्राः स्युर्माघे मूलं च विष्णुभं तपस्ये शक्रभरणी शून्यभान्याहुरग्रजाः एषु यत्कृतं कर्म धनैः सह विनश्यतीति १४ १५ अथ चैत्रादिमासेषु शून्यराशीननुष्टुभाह घट इति वसिष्ठः घटमत्स्यवृषा युग्ममेषकन्याः सवृश्चिकाः तुलाचापकुलीरास्ते मृगसिंहाश्च राशयः चैत्रादेर्मास

कदास्रभे त्वाष्ट्रवायू विश्वेज्यौ भगवासवौ वैश्वश्रुती याशिपौष्णे अजपादग्निपित्र्यभे १४ चित्राद्वीशौ शिवाश्व्यर्काः श्रुतिमूले यमेन्द्रभे चैत्रादिमासे शून्याख्यास्तारा वित्तविनाशदाः १५ घटो झषो गौर्मिथुनं मेषकन्यालितौलिनः धनुः कर्को मृगः सिंहश्चैत्रादौ शून्यराशयः १६ पक्षादितस्त्वोजतिथौ घटेणौ पंचास्यनक्रौ मिथुनाङ्गने च चापेन्दुभे कर्कहरी हयान्त्यौ गोऽन्त्यौ च नेष्टास्तिथिशून्यलग्ने १७

शून्याख्यास्ते वै वित्तविनाशनाः इति १६ अथ विषमतिथिषु दग्धलग्नानीन्द्रवज्रयाह पक्षादित इति शुक्लपक्षकृष्णपक्षादितः प्रतिपदमारभ्य तः ओजतिथौ विषमतिथौ प्रतिपत्तिथौ घटेणौ तुलामकरौ तृतीयायां मृगेन्द्रनक्रौ सिंहमकरौ पंचम्यां मिथुनकन्ये सप्तम्यां चापेन्दुभे धनुःकर्कौ नवम्यां कर्कहरी कर्कसिंहौ एकादश्यां हयान्त्यौ धनुर्मीनौ त्रयोदश्यां गोऽन्त्यौ वृषमीनौ एते तिथिशून्यलग्ने तस्यां तस्यां तिथौ नष्टे निषिद्धे वसिष्ठः मृगसिंहौ तृतीयायां प्रथमायां तुलामृगौ पंचम्यां वृषराशी द्वौ सप्तम्यां चापकुम्भे नवम्यां सिंहकीटौ एकादश्यां गुरोर्गृहे वृषमीनौ त्रयोदश्यां दग्धसंज्ञास्त्वमी ग्रहाः दग्धसमनिप त्रमसंकृतं सर्वं प्रणश्यति १७ अथैषां [illegible] नित्यारति द्वाभ्यां एवं धकाराल्लग्नानि

श्रीः ९

मु० टी० र्वेराचार्यैः सर्वार्थसिद्ध्यै कथितानि एवं चं दुश्रवणादीनि एते सिद्धियोगाः दस्रादर्कैर्मृगादिंद्वावित्यादिप्रकारेण आनंदादिसमीचीनसद्योगसंबंधिन स्त्रैर्न
मु० प्र० पनिबद्धाः भौमपराक्रमेण कुयोगा अप्युक्ताः ज्येष्ठादन्हि मघा विशाखवसवो मैत्रंयमाख्यं रवौ सोमे शैववि शाखवसुभ्यपवनाश्विनात्वषाढाद्वयं भौमे वि
९ श्वजलेशमित्रवसवः भाग्यादुसार्पो शिवः शूली रेवतीपूर्वयोनिभरणीवह्नश्चि मूलादुधे जीवे मूलमघाद्रियाम्यवरुणाद्रवा शशी रोहिणी शुक्रे स्वा
तिभुजंगदैवतमघावपुष्योत्तराहिणी सौराववर्यमसूल हस्तवरुणाषाढाद्वयं रेवती चित्रा विस्तु मघाश्च सर्वे समये त्याज्या अयोगा बुधैरिति २८ स्वे
अथावश्यकवर्ज्यत्वेन प्राप्त्युपस्थित्यर्थं उत्पातमृत्युकाणसिद्धियोगान् शालिन्याह दीशादिति विशाखादिचतुर्नक्षत्रैः उत्पातमृत्युकाणौ च सिद्धि

भौमेऽश्व्यहिर्बुध्न्यकृशानुसार्पं ज्ञे ब्राह्ममैत्रार्ककृशानुचान्द्रं २८ जीवेऽन्त्यमैत्राश्व्यदितीज्यधिष्ण्यं शुक्रेऽन्त्यमैत्राश्व्यदितिश्रवोभं
शनौ श्रुतिब्राह्मसमीरभानि सर्वार्थसिद्ध्यै कथितानि पूर्वैः २९ दीशातोयाद्वासवात्पौष्णभाच्च ब्राह्मात्पुष्याद्यमर्क्षाच्च
तुर्यैः स्यादुत्पातो मृत्युकाणौ च सिद्धिर्वारेऽर्काद्ये तत्फलं नामतुल्यं ३० कुयोगास्तिथिवारोत्थास्तिथिभोत्था भवारजाः
हूणवंगखशेष्वेव वर्ज्यास्त्रितयजास्तथा ३१ ॥०॥

योगाः रविवारे स्युः यथा रवौ विशाखाद्या उत्पातः अनुराधा मृत्युः ज्येष्ठा काणः मूलं सिद्धिरिति एवं सोमवारादौ पूर्वाषाढादितो ज्ञेयं तत्फलं नामसदृशं उत्पा
तमृत्युकाणानि निषिद्धाः सिद्धिः शुभेत्यर्थः नारदः विशाखादिचतुर्वर्गे भर्के वारादितु क्रमात् उत्पातमृत्युकाणाख्या योगाश्चामृतसंयुताः इति ३० अथ
देशविशेषेण कुयोगानां परिहारमनुष्टुभाह कुयोगा इति तिथिवारोत्थाः कुयोगाः क्रकचादयः तिथिभोत्थाः अनुराधा द्वितीयायामित्यादयः भवा
रजाः याम्यं त्वाष्ट्रं वैश्वदेवमित्यादयः तथा त्रितयजाः तिथिवारनक्षत्रजाः वर्जयेत्सर्वकार्येषु हस्तार्कं पंचमीतिथावित्येवमादयस्ते सर्वे हूणवंगखशदे
शेष्वेव वर्ज्याः अन्यदेशे न निषिद्धा इत्यर्थः नारदः तिथिवारोद्भवा नेष्टा योगा वारर्क्षसंभवाः हूणवंगखशेभ्योऽन्यदेशेष्वेते शुभप्रदा इति ३१ ॥ ॥ ॥ रामः ९

२४ अथैषां गणनोपायमनुष्टुभाह दस्रादिति अत्र नक्षत्राणां साभिजितां गणना कार्या यतोऽष्टाविंशतिर्योगाः यथा केदिने अर्कदिने नक्षत्रं श्रवणस्त दाश्विनीतः साभिजिद्गणनया त्रयोविंशतिसंख्यमस्ति तथा सत्यानंदादियोगेषु त्रयोविंशतिसंख्यो गदयोगो जातः एवमिंदुवारे मृगशीर्षाद्गणनया आनंदादयो ज्ञेयाः २५ अथैतेषु कियतोऽशुभयोगानामवश्यकर्तव्ये परिहारं शालिन्याह ध्वांक्ष इति ध्वांक्षवज्रमुद्गरयोगेषु आद्याः इषुनाड्यः पंचघटिका वर्ज्याः पद्मलुंबयोर्वेदाश्चतस्रः एवं गदेऽश्वाः सप्त धूम्रे भूरेकैव काणे घटिद्वयं मूसले द्वे घटिके राक्षसमृत्यूत्पातकालाः सर्वे षष्टिघटिकात्मका वर्ज्याः कालः कालदंडः अत्रानुक्तेऽपि चरयोगे घटित्रयं वर्ज्यं उक्तं च ज्योतिःसागरे ध्वांक्षेज्ञसुधमुद्गरेषु घटिकास्त्याज्यास्तु पंचादितः पद्मलुंब

उत्पातमृत्यू किल काणसिद्धी शुभोऽमृताख्यो मुसलं गदश्च मातंगरक्षश्चरसुस्थिराख्याः प्रवर्धमानाः फलदाः स्वनाम्ना २४ दास्रा
दर्के मृगादिंदौ सार्पात् भौमे कराद् बुधे मैत्राद्गुरौ भृगौ वैश्वात् गण्या मंदे च वारुणात् २५ ध्वांक्षे वज्रे मुद्गरे चेषुनाड्यो वर्ज्या वेदाः
पद्मलुंबे गदेऽश्वाः धूम्रे काणे मौसले भूर्द्वयं द्वे रक्षोमृत्यूत्पातकालाश्च सर्वे २६ सूर्यभाद्वेदगोतर्कदिग्विश्वनखसंमिते चंद्र
र्क्षे रवियोगाः स्युर्दोषसंघविनाशकाः २७ सूर्येऽर्के मूलोत्तरपुष्यदास्रं चंद्रे श्रुतिब्राह्मशशीज्यमैत्रं ॥

कयोश्चतस्र उद्दिष्टा धूम्रे सद्वैका पुनः द्वे काणे मुसलाह्वयेऽपि च गदे सप्तैव तिस्रश्चरे मृत्यूत्पातकरक्षसां दिनगतास्ताः कालदंडे तथा २८ अथ दोषापवादभूतान् रवियोगाननुष्टुभाह सूर्यभादिति सूर्यो यत्र तन्नक्षत्रमारभ्य चंद्रर्क्षे दिननक्षत्रे चतुर्नवषड्दशत्रयोदशविंशतिसंख्याके सति रवियोगाः स्युः ते च दोषसमूहानां नाशकराः उक्तं च सूर्याच्चतुर्थे दशमे च षष्ठे विश्वर्क्षके विंशतिमे नवर्क्षे भवंति षड्भानुसहस्रयोगाः कुयोगविध्वंसकराः प्रदिष्टाः २७ अथ सूर्यादिवारेषु नक्षत्रविशेषैः सिद्धियोगानिंद्रवज्रोपजातिकाभ्यामाह सूर्य इति जीवंऽतिच रविवारे हस्तमूलत्र्युत्तरपुष्याश्विनीनक्षत्राणि पू

मु०टी० खेटयोर्यत्रवासाविति विवाहवृंदावने नारदः ग्रहणोत्पात भेत्याज्यं मंगलेषु ऋतुत्रयमिति ननु नक्षत्रस्यैव जायमाने ग्रहणे किं नक्षत्रं दूषयेदित्यत्राह शार्ङ्ग-
मु०चि० धरः यस्मिन्विधुं राहुरिनं वाथि ऋक्षे गृह्णाति तत्याज्यमृतुत्रयं स्यात् पाणिग्रहे पुंसवनं विधत्ते द्वयोर्भयोश्चैव हु यमेव जह्यात् अन्यत्सपक्षांतरेण ग्रहणदूषं स्याद्ग्र-
९ दानदानजग्रहणोपगं भं पक्षाद्धि शुद्धं भवति द्वितीयपाणिग्रहे शुध्यति भोगषट्कात् इति ३२ अथ ग्रहणनक्षत्रे ग्रासभेदेन निंद्यान्मासदिवसांश्चैवदन्नाह
नेदमिति ग्रहर्क्षं ग्रहणनक्षत्रं क्रमात् संपूर्णार्धचतुर्थांशः ग्रासे सति षट्त्र्येकमासान्नेष्टं गुरुः सर्वग्रासे तु षण्मासान् त्रीन्मासांस्तु दले ग्रहे आपादग्रहणे चिह्नं
मासमेकं विवर्जयेत् अथ क्रमात् ग्रस्तोऽस्तगे ग्रहणार्धग्रासे उभयोः प्राक्पश्चात्त्रित्रिघस्रान्नेष्टाः तथा अर्धखंडे ग्रस्तास्तग्रस्तोदययोरभावेपि अर्धग्रासे उभ-
योः प्राक्पश्चाच्च त्रित्रिघस्रान्नेष्टाः गुरुः ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा खंडग्रासे त्रित्रिदिनं निःशेषे सप्त सप्त चेति कश्यपः ग्रस्तोदये परो दोषो ग्रस्तास्ते

9

उत्पातग्रहतोऽङ्गमहा शुभदोत्पाते भदुष्टं दिनं षण्मासं ग्रहभिन्नभं त्यज शुभे यद्वोद्धृतोत्पातभं ३२ नेष्टं ग्रहर्क्षं सकलार्धपादग्रासे।
क्रमात्तर्कगुणोडुमासान् पूर्वं परस्ताद्भयोस्त्रिघस्रा ग्रस्तास्तगे वाप्युदिते च खंडे ३३ जन्मर्क्षमासतिथयो व्यतिपातभद्रावैधृत्य
नि२ मापितृदिनानि तिथिक्षयवृद्धी ॥

वोक्शशीनयोः ग्रुनिशार्धेन भयं तत्खंडी खंडव्यवस्थयोरिति ३३ अथ सामान्यतो वर्ज्यवर्ज्यानि पंचांगदूषणादीनि वसंततिलकानुष्टुभ्यामाह जन्मर्क्षेति परि।
घार्थेति च जन्मनक्षत्रजन्ममासजन्मतिथयः शुभकर्मसु वर्ज्याः अयं निषेध आद्यगर्भस्यैव नारदः न जन्ममासे जन्मर्क्षे न जन्मदिवसेपि वा आद्यगर्भसुतस्या
थ दुहितुर्वा करग्रह इति जन्ममासः सविशेषो वर्जितः सर्वकर्मसु वस्तुतस्तु पत्रशुक्लादिचांद्रमासे चैत्रादौ जन्माभूत् स चांद्रो मासो जन्ममासस्त्याज्यः इंद्राग्नी यत्र हूयेते
मासादिः संप्रकीर्तितः अग्नीषोमौ स्मृतौ मध्ये समासौ पितृसोमकौ इति हारीतोक्तमासलक्षणात् व्यतीपातादयः सर्ववर्ज्याः पितृदिनं मातापित्रोर्मरणदिनं तिथिक्ष-
यवृद्धी तिथिक्षयस्तिथिवृद्धिश्च तल्लक्षणमाह वसिष्ठः स्पृशेत्सूर्यतिथयो वारेऽएकस्मिन्नवमा तिथिः तिथिर्वा स्त्र्यैकास्त्रिघुस्पृक्दुष्टापि निंदितो न्यूनमासः अधिमास

अथ समस्तशुभकृत्येवर्ज्यान् शार्दूलविक्रीडितेनाह सर्वस्मिन्निति सर्वस्मिन्शुभेकार्ये एतानिवैनिश्चयेनत्यजपरिहरेत्यर्थः विद्धनापापेनवापापैःक्षीणं
दर्कमहीसुतार्के नयैर्वायुतोयुक्तौतनुलवौलग्नलग्ननवांशौ त्याज्यौ पूर्णक्षीणोपिवाचंद्रोलग्नेसर्वत्रगर्हितइतिकश्यपोक्तेः पापैर्दूल
मगौवांशगतौवर्ज्यौ शुभेसदेतिच निशान्होरर्धेरात्र्यर्धेदिनार्धेचघटीअंशंविंशतिपलानिदशपूर्वंदशपश्चाच्चपरिहरउक्तंचमूर्तः कालोनिवसति
महानिशायांचदिनदलेयस्मात्दशपूर्वांदशपरतस्तस्माद्वर्ज्यानिचपलानि कुनवांशकंपापग्रहनवांशकंपरिहर अथग्रहणात्तः पूर्वंदिनानांत्रयंपरि
हरउत्पातग्रहतः उत्पातादिव्यभौमान्तरिक्षास्तेयस्मिन्दिनेभवंतिततोऽग्रहाच्चसप्तदिनानिवर्ज्यानि यहोग्रहणं तस्मात् अपि सप्तदिनानिवर्ज्यानि
उक्तंच चंद्रसूर्योपरागेषु अहं पूर्वं शुभं त्यजेत् सप्ताहमशुभंपश्चात् त्यक्तंग्रहणसूतकं त्रिविधोत्पातश्चोर्ध्वं सिंहिकासुतदर्शने सप्तरात्रंनकुर्वीतया
त्राद्वाहादिमंगलमिति अंगिरा अपि सर्वेग्रासेनुसप्ताहमर्धग्रासेदिनत्रयं त्रिद्व्यंगुलतोग्रासेदिनमेकंविवर्जयेत् वसिष्ठःसर्वग्रासेदिनान्यष्टौ

सर्वस्मिन्विद्धपापयुक्तनुलवाकर्ढेनिशान्होर्घटी अंशंचैकुनवांशकंग्रहणतः पूर्वंदिनानांत्रयं ॥ ॥ ॥ ॥०

सर्वकार्येविवर्जयेत् षड्दिनानित्रिभागोने अर्धग्रासेचतुर्दिनं चतुर्थांशेत्रिरात्रंस्यात्ग्रहणेचंद्रसूर्ययोः अत्रकार्यस्यावश्यकत्वेपरिहारोज्योतिर्निबंधेपंच
दिनानिवसिष्ठस्त्रिदिनंगर्गस्तथाकौशिकस्त्वेकं यवनाचार्यस्यमतंपंचमुहूर्तानिहूयपतिरङ्गिरा इति अयंचनिषेधोनित्यनैमित्तिकादिकृत्यातिरिक्तविषयः
शुद्धः नित्येनैमित्तिकेकाम्येजपहोमक्रियासुच उपाकर्मणिचोत्सर्गे ग्रहवेधोनविद्यतइति शुभदोत्पातिंस्त्वदुष्टं दिनमिति शुभदोत्पाताः वराहसंहिता
यां चंद्राशनिमहीकंपसंध्यानिर्घातनिस्वनाः परिवेषरजोधूमरक्तार्कास्तमनोदयाः द्रुमेभ्योन्नरसस्नेहमधुपुष्पफलोद्गमाः गोपक्षिमदवृद्धिश्चशु
भायमधुमाधवेस्युः इत्यादयस्तनुपरत्वेनोक्ताः एतेयद्दिनेभवंतितद्दिनमेवत्यज अथग्रहभिन्नभंग्रहैर्भौमादिभिर्भिन्नंभेदितंतयायोर्द्वयंग्रहयोर्युद्धंपस्त्विति
ननक्षत्रेयुद्धंजातं तथाउत्पातभंयस्मिन्नक्षत्रेदिव्यांतरिक्षभौमास्त्रिविधोत्पाताःसंभूताःएतानिग्रहभिन्नयोद्धउत्पातनक्षत्राणिषण्मासंत्यजभेदस्तारा

मु०टी० कः तस्मिन् द्विगुणे चतुर्दश जाताः तेन सौ चतुर्दशो मुहूर्तः कुलिकः। एवं बुधः संख्या चत्वारः तत् द्विगुणोऽष्टमो मुहूर्तः कालवेला जीवे पंचद्विघ्ने दशमो यमघंटः
मु०प्र० भौमे तृतीये द्विघ्ने षष्ठो मुहूर्तः कंटकसंज्ञः इत्यर्थः एवं सोमवारादावपि अथ शुभकृत्यावश्यकत्वे सति देशभेदेन कुलिकादिदोषपरिहारमाह गर्गः
१० विंध्यस्योत्तरकूले तु यावद्धिमाचलं यमकंटकदोषोऽस्ति नान्यदेशेषु विद्यते मत्स्यांगमागधांध्रेषु यमघंटस्तु दोषकृत् काश्मीरे कुलिकं दुष्टमर्धे
यामस्तु सर्वत इति केचिन्मते कालवेलादिवृत्तः शरादिस्थितकोनलागां बुधयोः ५।२।६।३।७।४ गजेंदू ८।१॥ दिनेनिशायामनुवेदनेत्रनगेषु रामा
६।४।२।७।५।३। विधुर्दंतिनी ७।८ चगजेंदूः इत्यर्थे महरद्वयं शनौ पात्रायां मरणं कालवेधध्यपाणिपीडने अतेब्रह्मवधः सोऽतः शुभकर्मत तत्त्यजेत्।

10 वारा द्विघ्ने क्रमान्मंदे बुधे जीवे कुजे स्मृताः ३७ सूर्ये षट्स्वरनागदिक्स्वनुमितांश्चंद्रे द्विषट्कुंजरां काकौ विश्वयुगं दशाक्षितिसु
तेद्व्यब्ध्यग्नितर्कादिशः सौम्ये षड्द्विगजांकदिक्स्वनुमिता जीवे द्विषड्भास्कराः शक्राख्यातिथयः कलाश्च भृगुजे वेदेषुत
कोग्रहाः ३८ दिग्भास्करामनुमिताश्च शनौ शशिद्विनागादिशो भवदिवाकरसंमिताश्च इत्थं क्षणाः कुलिककंटककालवे
लास्तु अर्धयामयमघंटगताः कलांशाः ३९

गौडः सूर्ये वेदशरौ ४।५ चंद्रे हयपक्षौ ७।२ कुजे क्षितिभूः २।१॥ ज्ञे बाणाग्नी ५।३ गुरौ दंतिहयौ ८।७ शुक्रे निवेदकौ ३।४ मंदे तर्केगजौ ६।८ ज्ञेयौ
यामार्धौ वसुभौमसदेति ३० अथ सूर्यादिवारेषु शिष्याणां सुघटवदोषज्ञानार्थं मुहूर्तोदिनामकान् मुहूर्तान् शार्दूलविक्रीडितवसंततिलकाभ्यामा
ह सूर्ये इति दिग्भास्करा इति च रविवारे षष्ठसप्ताष्टमदशमचतुर्दशमुहूर्ता निंद्याः। एवं सर्वत्र अयमर्थो मूलेन्यासतः स्पष्ट एव एषु मुहूर्तेषु कश्चिद्दुर्मुहूर्तो रामः
कश्चित्कुलिकः कंटकः कालवेलाख्यः अर्धयामाख्यः यमघंटाख्यः स्यात् तन्मार्गणकलांशः दिनमानस्य षोडशांशाः ३८ ३९ ॥ रामः ॥ रामः १०

न्यूनमासः अधिमासश्चवर्ज्यः संक्रमद्वयसहितः क्षयमासः अधिकमासोऽसंक्रांतः कुलिकार्धप्रहरौ वक्ष्यमाणौ पातो महापातः विष्कुंभयोगवज्रयोगयोराद्यंघटिकात्रयमेव वर्ज्यं एवं प्रकारेण केचिद्वज्रयोगे नवघटिका वर्ज्या इत्युक्तं यथा विष्कुंभाद्यघटीत्रयं च नवकं व्याघातवज्रोद्भवे इति रत्नशते तथा व्याघातवज्रकेकाइति गणेशज्योतिर्विद्भिरपि निरस्ता विष्कुंभवज्रयोस्तिस्रः षट् च गंडातिगंडयोः व्याघाते नव शूले तु पंच नाड्या विगर्हिता इति कश्यपोक्तेः परिघस्याद्यार्धं वर्ज्यं शूलस्याद्याः पंच गंडातिगंडयोराद्याः षट्षट्घटिकाः व्याघाते चादिमा नव घटिकाः वर्ज्याः ३४ ३५ अथ पक्षरंध्रतिथीरावश्यकत्वेन त्विष्टवर्ज्येषु घटीश्चानुष्टुभाह वेदांगेनिचतुर्थीषष्ठीअष्टमीनवमीद्वादशीचतुर्दशीएताः पक्षरंध्रतिथयो ज्ञेयाः आसु शुभकृत्यस्यावश्यकत्वे सति आदिमाः क्रमात् वसुंकमनुतत्त्वाशाशराः नाडीस्त्यजेत् यथा चतुर्थ्याः आदिमा अष्टघटिकाः षष्ठ्यां नव अष्टम्यां चतुर्दश नवम्यां पंचविंशतिः द्वादश्यां दश चतुर्दश्यां पंच घटिकास्त्या

न्यूनाधिमासकुलिकप्रहरार्धपातविष्कुंभवज्रघटिकात्रयमेव वर्ज्यं ३४ परिघार्धपंचशूलेषट्चगंडातिगंडयोः व्याघातनवनाड्यश्च वर्ज्याः सर्वेषु कर्मसु ३५ वेदांगाष्टनवार्केंद्रपक्षरंध्रतिथौ त्यजेत् वसुंकमनुतत्त्वाशाशरान्नाडीः पराः शुभाः ३६

कुलिकः कालवेला च यमघंटश्च कंटकः ॥ नीध्यं॰१

ज्या इत्यर्थः पराउर्वरिताः शुभा ज्ञेयाः वसिष्ठः चतुर्दशी चतुर्थी च अष्टमी नवमी तथा षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वयाः स्मृताः क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः भूताष्टमनुतत्त्वांकदशशेषाः सुशोभनाः दोषनाडीषु यत्कर्म संकृतं सर्वं विनश्यतीत्यादि कश्यपेन सर्वसाधारण्येन दशैव वर्जिताः ३६ अथ कुलिककालवेलायमघंटककंटकदोषाननुष्टुभाह कुलिक इति वर्तमानवारान्मंदेशाने ष्वरेगणिते सति यो अंको भवति तस्मिन्द्विगुणे यो अंकस्तत्संख्याक्षणो मुहूर्तः कुलिको भवति एवं बुधे जीवे भौमे वर्तमानवारादुणिते यो अंको भवति तत्समद्विघ्नः क्रमात् कालवेलायमघंटकंटकसंज्ञा इष्टमुहूर्ताः स्युः यथा रविजः शनिः सप्तसंख्या

मु०टी० इविष्टिपूर्वे भिति विष्टिर्भद्रा सा पूर्वार्धेस्य विष्ट्यादिकं मध्याह्नानन्तरं शस्तमाहुः उक्तं च विष्टिरङ्गारकश्चैव व्यतीपातः सवैधृतिः प्रत्यरं जन्मनक्षत्रं मध्या
शु०प्र० ह्नात्परतः शुभमिति ४२ अथ भद्रां शालिन्याह शुक्ले इति शुक्ले शुक्लपक्षे अष्टम्यां पौर्णिमायां च पूर्वार्धे भद्रा स्यात् एकादश्यां चतुर्थ्यां च उत्तरार्धे भद्रा कृ
११ ष्णपक्षे तृतीयायां दशम्यां च अन्त्यार्धे उत्तरार्धे सप्तम्यां शंभुतिथौ चतुर्दश्यां च पूर्वार्धे पूर्वे भागे भद्रा स्यात् भद्रा सर्वत्र रत्नमालायां उक्ता इत्यादि
४२ अथ चतुर्थ्यादितिथिषु भद्रायाः मुखपुच्छविभागं शार्दूलविक्रीडितेनाह पंचघट्यीति चतुर्थ्यादितिथीनां पंचादिप्रहरेषु आदिघट्यः शराः पंच
संख्याविशेषैर्भद्राया आस्यं मुखं यथा चतुर्थ्याः पंचमप्रहरे आदिभूताः पंचघट्यो भद्रामुखं एवमष्टम्यां द्वितीयप्रहरे एकादश्यां सप्तमप्रहरे पूर्णिमायां।

11

परे लग्नशुध्याकुयोगादिनाशं दिनार्द्धोत्तरं विष्टिपूर्वे च शस्तं ४२ शुक्ले पूर्वार्धेष्टमीपंचदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्धे कृष्णे
न्त्यार्धे स्यात्तृतीयादशम्योः पूर्वे भागे सप्तमीशंभुतिथ्योः ४३ पंचद्व्यद्रिकृताष्टरामरसभूयामादिघट्यः शरा विष्टेरास्यमसद्
गजेंदुरसरामाद्र्यश्विबाणाब्धिषु ॥ तिथय: ४।८।११।१५।३।७।१०।१४।

चतुर्थे प्रहरे तृतीयायामष्टमे सप्तम्यां तृतीये दशम्यां षष्ठे चतुर्दश्यां प्रथमे प्रहरे भद्रामुखं स्यात् तद्सत् अशुभमित्यर्थः अथ पुनश्चतुर्थ्यादितिथीनां क्र
मेणागजेंद्वित्यादिप्रहरेषु अन्त्यभवं घटीत्रयं पुच्छं संज्ञातं शुभकरं यथा चतुर्थ्या अष्टमप्रहरस्यान्त्यघटीत्रयं भद्रापुच्छं एवमष्टम्यादिषु प्रथमादिप्रह
रस्यान्त्यघटीत्रयं पुच्छं ज्ञेयं तत्र भद्राकर्माणि वसिष्ठः वधबंधविषाग्न्यस्त्रच्छेदनोच्चाटनादि यत् तुरंगमहिषोष्ट्रादिकमेविष्ट्यां तु सिध्यति अंगविभा
गः कश्यपसंहितायां मुखे पंच गले त्वेका वक्षस्येकादश स्मृताः नाभिश्चतस्रः षट्कट्यां तिस्रः पुच्छे तु नाडिकाः कार्यहानिर्मुखे मृत्युर्गले वक्षसि राम:
निःस्वता कट्यामुन्मत्तता नाभौ च्युतिः पुच्छे ध्रुवो जयः अथ विष्टिपरिहारमाह तथेति तिथ्यपरार्धे जाता पुनरार्धभूता विष्टिर्वा सरे दिवसे यदि स्यात् ११

अथ विवाहादिशुभकृत्ये होलिकाष्टकनिषेधं देशपरत्वेनाह विपाशेति विपाशा इरावती शतद्रुः एताः पश्चिमदेशप्रसिद्धाः नद्यस्तासां तीरे उभयतटवर्तिदेशे। त्रिपुष्करदेशे च होलिकाफाल्गुनशुक्लपौर्णिमातः प्राग्दिनाष्टकं विवाहादिशुभकृत्येनेष्टं निषिद्धं अर्थादन्यदेशे न निषिद्धं ४० अथ मृत्युयोगादिदुष्टयोगपरिहारमनुष्टुभाह मृत्युक्रकचेति मृत्युयोगादयस्तादृक् इत्यादिना आनंदादिसूक्ताः क्रकचाः षष्ठ्यादितिथयो मंदादिविलोममित्युक्ताः दग्धादियोगाः सूर्येशपंचाग्नीत्यादिनोक्ताः चंद्रे शस्ते कर्तुर्गोचरेण समीचीने सति एतान् योगान् शुभान् शुभफलदान् जगुः ऊचुः राजमार्तंडः क्रकचामृत्युयोगास्त्वादिनदग्धं तथैव च चंद्रे शुभे क्षयं यांति नक्षत्रावज्ञहताश्च अथ केचिदाचार्याः यामोत्तरं प्रहरोत्तरं मृत्युक्रकचदग्धादीनशुभान् जगुः स एवाह उत्पातयमघंटेव

विपाशैरावतीतीरे शतद्र्वाश्च त्रिपुष्करे विवाहादिशुभे नेष्टं होलिकाप्राग्दिनाष्टकं ४० मृत्युक्रकचदग्धादीनिंदौ शस्ते शुभान् जगुः
केचिद्यामोत्तरं चान्ये यात्रायामेव निंदितान् ४१ अयोगे सुयोगोऽपि चेत्स्यात्तदानीमयोगं निहत्यैष सिद्धिं तनोति ॥ ० ॥०॥

काणो च क्रकचे तथा तिथौ दग्धे च काले च भाग्यामात्परतः शुभमिति अथान्ये आचार्याः मृत्युक्रकचदग्धादीन् यात्रायामेव निंदितान् जगुः विवाहादौ न तु दोषः लल्लः वारर्क्षतिथियोगेषु यात्रामेव विवर्जयेत् विवाहादीनि कुर्वीत गर्गादीनामिदं वचः निंद्येष्विति शेषः अन्यच्च अयोगेषु च सर्वेषु वर्जयेद्घटिकाद्वयं उत्पातमृत्युकाणानां पंचषट्सप्तनाडिकाः ४१ पुनरप्यपवादं भुजंगप्रयातेनाह अयोगेऽति अयोगे क्रकचादौ सति चेत्सुयोगः सिद्धियोगोऽपि स्यात् तदा एषः सिद्धियोगः अयोगफलं निहत्य सिद्धिं तनोति निष्पादयति मार्तंडः अयोगः सिद्धियोगश्च द्वावेतौ भवतो यदि अयोगो हन्यते तत्र सिद्धियोगः प्रवर्तते परे आचार्याः लग्नशुद्ध्या कुयोगादिनाशमाहुः यदाह कश्यप एव यत्र लग्नं विना किंचित् क्रियते शुभसंज्ञकं तत्रैतेषामयोगानां प्रभवाज्जायते फलं॥ अथावश्यककृत्ये कालांतराभावपरिहारमा ॥

मु०टी० अथान्यानि शार्दूलविक्रीडितेनाह दीक्षामौंजीति दीक्षामंत्रग्रहणादिका मौंजिविवाहौ प्रसिद्धौ मुंडनं चौलं अपूर्वं देवेक्षणं तीर्थेक्षणं च संन्यासः प्रसिद्धः अ
मु०पु० ग्निपरिग्रहो ग्निहोत्रं अपूर्वं राजदर्शनं राज्याभिषेकश्च गमं गमनं अपूर्वमेव चातुर्मास्यं चातुर्मास्ययागः समावर्तनं मौंजीविसर्गः श्रवणयोर्वेधः कर्णवेधः
परीक्षा न प्रमाणादि संस्कारादि व्यमिति यावत् एतानि कर्माणि बुधो न कुर्यात् कदा इज्यसितयोर्बृहस्पतिशुक्रयोर्दृह्त्वे अस्ते च शिशुत्वे वाल्ये च तथान्यूनाः
धिमासे क्षयमासे अधिमासे च न कुर्यात् अत्र मूलवचनानि शातातपः अस्तं गते गुरौ शुक्रे वाले वृद्धे मलिम्लुचे उद्यापनमुपारंभं व्रतानां नैव कारयेत् क
र्णो वेधः वापीकूपतडागयागगमनं क्षौरं प्रतिष्ठाव्रतं विद्यामंदिरकर्णवेधनमहादानं वनं सेवनं तीर्थस्नानविवाहदेवभवनं मंत्रादिदेवेक्षणं दूरेणैव जि
जीविषुः परिहरेदस्तं गते भार्गवे उपनयनं गोदानं पाणिग्रहणं गृहप्रवेशगमनानि अस्तमिते प्रकुर्यान्न गुरुगुरुस्त्वगुरुश्च चंद्रे तु अस्तमयादि फलमाह व
दरायणः गुरोरस्ते पतिं हन्यात्कुमारी चैव कन्यकां चंद्रे नष्टे उभौ हन्यात्तस्मादस्तं विवर्जयेत् वाल्यभावे स्त्रियं हन्यात् वृद्धभावे नरं तथा मलमासे क्षयमासे च वा

दीक्षामौंजिविवाहमुंडनमपूर्वं देवतीर्थेक्षणं संन्यासाग्निपरिग्रहौ नृपतिसंदर्शाभिषेकागमं ॥०॥०॥०॥

र्षे च विवाहं नैव कारयेत् अथाधिमासे वर्ज्यानि गृह्यपरिशिष्टे सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे तथैवाग्रयणाधानचातुर्मास्यादिकान्यपि महाल
यामृकाश्राद्धोपाकर्माद्यपि कर्मयत् स्पष्टमासविशेषाख्योविहितं वर्जयेन्मले गर्गबृहस्पती अन्याधानप्रतिष्ठां च यज्ञदानव्रतानि च वेदव्रतवृषोत्सर्गचू
डाकरणमेखला मांगल्यमभिषेकं च मलमासे विवर्जयेत् मरीचिः गृहप्रवेशगोदानस्थानाश्रयमहोत्सवं न कुर्यान्मलमासे तु संसर्पांहस्पतौ तथा वसिष्ठः
वापीकूपतडागादि प्रतिष्ठायज्ञकर्म च न कुर्यान्मलमासे तु संसर्पांहस्पतौ तथा यदा क्षयमासो भवति तदा क्षयमासस्य पूर्वोत्तर एवाधिमासौ भवतः तत्र पूर्वः
संसर्पः द्वितीयोंहस्पतिः एतानि गुरुशुक्रयोरस्तादावपि वर्ज्यानीत्याह गार्ग्यः वाले वा यदि वा वृद्धे शुक्रे वास्तंगते गुरौ मलमासइवैतानि वर्जयेद्देवदर्शनं अ





12

तथानेनैवप्रकारेणतिथिपूर्वार्धोत्थात्रौ शुभकरी नारदनिषेधमाहपूर्वार्धोत्थायदानिशितदाविष्टिः शुभायेति कमलासनभाषितं ४४ अथभद्र निवासंतत्फलंचानुष्टुभाह कुंभकर्केति अजोचंद्रेकुंभद्वयेकुंभमीनस्थेकर्कद्वयेकर्के सिंहराशिस्थितेमनुष्यलोकेतिष्ठति अथमेषात्त्रयेमेषवृष मिथुनस्थितेअलिगेवृश्चिकस्थेचंद्रेचस्वर्गलोकेभद्रातिष्ठति कन्यातुलाधनुर्मकरराशिषुचंद्रेअधःपाताललोकेभद्रातिष्ठति तत्रैवमर् त्येस्वर्गपातालेषुफलंचोक्तंशुभाशुभभद्रादद्यातीत्यपवादद्वाराप्रयोजनमुक्तंभवति उक्तंच मेषोक्षकौर्प्यमिथुनेघटसिंहमीनकर्केषुचापमृग तौलिसुतासुचंद्रेस्वर्गमर्त्यनागनगरीक्रमशःप्रयातिविष्टिः फलान्यपिददातिहितत्रदेशे उक्तंचभूपालवल्लभेकर्ककुंभद्वयेभूस्थाकौर्प्येजत्रितं

यामेषत्र्ययरीत्रयंशुभकरं पुच्छं तथा वासरे विष्टिस्तिथ्यपरार्धजाशुभकरी रात्रौ च पूर्वार्धजा ४४ कुंभकर्कद्वये मर्त्ये स्वर्गे
ऽब्जात्त्र्येऽलिगे स्त्रीधनुर्जूकनक्रेऽधो भद्रा तत्रैव तत्फलं ४५ वाप्यारामतडागकूपभवनारंभप्रतिष्ठेव्रतारंभोत्सर्गव
धूप्रवेशनमहादानानि सोमाष्टके गोदानाग्रयणप्रपाप्रथमकोपाकर्मवेदव्रतं नीलोद्वाहमथातिपन्नशिशुसंस्कारा

मु॰ चि॰ टी॰

येष्वगा कन्याचापद्वयेचंद्रेभद्रायातालवासिनीति ४५ अथकालशुद्धौ निषेध्यवस्तूनि शार्दूलविक्रीडितेनाह वाप्यारामेति वापी दीर्घिका आरामउ पवनं तडागपुष्करिणी कूपः प्रसिद्धः एतेषामारंभप्रतिष्ठा आरंभो निर्माणं प्रतिष्ठाउत्सर्गः तत्रगृहप्रतिष्ठागृहप्रवेशोज्ञेयः व्रतानामनंतव्रतादीनां आरंभः यद्दर्शाउत्सर्गउद्यापनं महादानानितुलापुरुषादीनि सोमः सोमयागः अष्टकाअष्टकाश्राद्धं गोदानंकेशांतसंज्ञंकर्मआग्रयणंनवान्ने ष्टिः प्रपा जलशाला प्रथमकोपाकर्मप्रथमारभ्यमाणंश्रावणीकर्म वेदव्रतंमहानाम्न्यादित्रयं महानाम्नीव्रतं उपनिषद्व्रतंवेदव्रतंच नीलोद्वा हः काम्यवृषोत्सर्गः अतिपन्नशिशुसंस्काराः अतिपन्नाः [illegible] संस्काराः देवस्थापनं ४६ ॥ रामः ॥०॥

मु०टी० मौढ्यदोषो न विद्यते वायुपुराणे त्रिस्थलीसेतौ गयायां सर्वकालेषु पिंडं दद्याद्विधानतः अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः न त्यक्तव्यं गयाश्राद्धं सिंह
मु०प्र० स्थे च बृहस्पतौ अधिमासे सिंहगुरावस्ते च गुरुशुक्रयोः तीर्थयात्रा न कर्त्तव्या गयां गोदावरीं विनेति अथ पूर्वार्धस्थलेऽपि यद्वर्ज्यं तदुक्तं गेगुरौ अतिचारेऽपि गुरौ वर्ज्यं
२२ वात्स्यः यात्रा द्वाहमतिसंस्थाच बृहच्चूडाव्रतादिकं वर्जयेद्यत्नतस्तत्र जीवे वक्रातिचारगे अस्यापवादो राजमार्तंडे वक्रातिचारगे जीवे वर्जयेत्तदनंतरं अष्टौ
द्वाहादिचूडायाम अष्टाविंशतिवासरान् दीपिकायां त्रिकोणजायाधनलाभराशौ वक्रातिचारेण गुरुः प्रयातः यदा तदा प्राह शुभे विलग्नं विहाय पाणिग्र
हणं वसिष्ठः अथ केचित् कुलसहिते आदित्ये एकराशिगतौ गुरुसूर्यौ विति यावत् गुर्वादित्येऽपि सर्वं शुभकर्म वर्ज्यं शौनकः एकराशिगतौ सूर्यजीवौ स्या
तां यदा पुनः व्रतबंधविवाहादि शुभकर्माखिलं त्यजेत् अथ केचिद्विश्वघस्रेऽपि पक्षे यस्मिन्पक्षे तिथिद्वयनाशः स त्रयोदशदिनः पक्षस्तोतिनिंद्यः उक्तं

गुर्वादित्ये विश्वघस्रेऽपि पक्षे प्रोचुस्तद्वद्दंतरत्नादिभूषां ४८ ॥

च पक्षस्य मध्ये द्वितिथावपेतौ न दा भवेद्रौरवकालयोगः पक्षे विनष्टे सकलं विनष्टमित्याहुराचार्यवराः समस्ताः तथा त्रयोदशदिने पक्षे तदा संहरते जगत्
अपि वर्षसहस्रेण कालयोगः प्रकीर्तितः इति तस्मिन्पक्षे शुभकर्म वर्ज्यमित्याहुः चंडेश्वरः त्रयोदशदिने पक्षे विवाहादि न कारयेत् गर्गादिमुनयः
प्राहुः कृते मृत्युस्तदा भवेत् उपनयनं परिन पुनर्वेशप्रारंभ आदि पुण्यकर्माणि यत्नाद्विपक्षपक्षे कुर्याज्जिजीविषुः पुरुषाः अथ तद्दोषेनप्रकारेणांतर राम०
त्नादिभूषां दंताहस्तिदंताः तत्संबंधिनी भूषां रत्नसंबंधिभूषां च आदिशब्दात्सुवर्णमणिसंबंधिनीं च भूषां वर्ज्यां प्रोचुः पूर्वस्मिन्निषेधकाले इत्यर्थः २२
राजमार्तंडः यात्रां चूडां विवाहं श्रुतिविचरविधिं प्रारंभमवेशमासादोद्यानहर्म्यं सुरनरभवनारंभविद्याविधाने मौंजीबंधं प्रतिष्ठां मणिकनकरदाधारणां कुर्व
ते ये मृत्युः सिंहस्थिते जेयगुरुदिनकरयोरेकराशिस्थयोश्चेति सिंहस्थगुरोरपलक्षणात्वात् गुर्वस्तादावपि प्रथमवर्त्तव्यस्त्ववर्णादिधारणा निषेधस्त्वर्थः ४९



13

सुर्नेष्टभार्गवे मलमासेप्यनावृत्तीतीर्थयात्रांविवर्जयेत् अनावृत्ताअपूर्वतीर्थयात्रा अत्रनियमकालानिसीमंतनामकरणादीनिपूर्वोक्तानिदिसत्वेपिस्वस्व
कालएवकार्याणिगुरुः मासप्रयुक्तकार्येषुमूढत्वंगुरुशुक्रयोः नदोषकृन्मलेमासेगुर्वादित्यादिकंतथा अन्यत्रापि सीमंतजातकादीनिप्राशनांता
नियानिवै नदोषोमलमासस्पर्शेऽपस्यगुरुशुक्रयोरितिवसिष्ठः अतीतकालान्यखिलानिनित्यानिकार्याणिसौम्यायनगेदिनेशे सितेगुरौवाप्यथ
दृश्यमानतदुक्तपंचांगदिनेष्वखंडे अतएवात्रियन्नशिशुसंस्काराःस्युक्तं ४७ अथसिंहमकरस्थगुर्वादिस्थितिदेशमाह अस्तेवर्ज्यमिति यदस्तेगु
र्वेस्ते वर्ज्यंनिषिद्धमुक्तंतत्सिंहस्थेगुरौ मकरस्थेचगुरौवर्ज्यंनिषिद्धं देवीपुराणेसिंहसंस्थेगुरौयत्नात्सर्वारंभान्विवर्जयेत् उत्पन्नात्रकलत्राणिहन्या
द्धीमनसंशयः कारकोव्रजतेनाशंसंतानंम्रियतेध्रुवम् देवारामतडागानिप्रपोद्यानगृहाणिच विवाहयज्ञोपनयनचूडादिनसिध्यति यथासिं

चातुर्मास्यसमावृत्तीश्रवणापोर्वेधंपरीक्षांत्यजेद्ददत्वात्तशिशुत्वईज्यसितयोर्न्यूनाधिमासेनथा ४७ अस्तेवर्ज्यंसिं
हनक्रस्थजीवेवर्ज्यंकेचिद्वक्रगेचातिचारे ॥

दृस्थितोजीवस्तथैवमकरस्थितः अयमपिनिषेधोनियतकालानांनसंग्रहः वसिष्ठः नी
चराशिगतोजीवः प्रशस्तः सर्वकर्मसु नीचेनीचांशकस्त्याज्योयस्माद्देशसुनीचता विशेषोमांडव्येनोक्तः देवीपुराणेमकरस्थोयदाजीवोवर्जयेत्तंप्रय
मांशकं शेषेष्वपिचभागेषुविवाहः शोभनोमतः लोडरानंदः अतिचारेसप्तदिनेवक्रेद्वादशमेवच नीचस्थितेपिवागीशेमासमेकंविवर्जयेत् ज्यो
तिर्निबंधे हरिनीचादिभागेपितोद्वाहादिमंगलं ननिषिद्धंयदिस्याच्चेत्सभेवांसस्थितोगुरुः मघात्यकापदागच्छेत्फाल्गुनींचबृहस्पतिः सुत्रि
णीधनिनीकन्यासौभाग्यसुखमश्नुतइति क्वचिदपूर्वतीर्थयात्रायांगोदावर्यांगयायांचश्रीशैलेग्रहणद्वये सुरासुरगुरूणांच

मु॰टी॰ नद्याः पश्चिमे विभागे शोणनदस्य उत्तरदक्षिणभागे नीचईज्यः लब्धः नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे गंडक्याः पश्चिमे भागे मकरस्थो न दोषभाक्
मु॰प्र॰ अन्यदेशेषु निषिद्धदेशानाह अयमिति अयं मकरस्थगुरुः कोकणदेशे गौडदेशे सिंधुदेशे च शुभकृत्येषु वर्ज्यो निषिद्धः उक्तं च मागधे गौडदेशे च।
२५ सिंधुदेशे च कोंकणे व्रतं चूडां विवाहं च वर्जयेन्मकरे गुरौ एभ्योन्यदेशेषु मंगलमर्थात्मध्यमं ५२ अथ लुप्तसंवत्सरदोषं सापवादं वंशस्थविरेणाह
गोजांत्येति गो वृषः अजो मेषः अंत्यो मीनः कुंभः प्रसिद्धः एभ्य इतरभेऽन्यराशौ मिथुनादौ अतिचारगो गुरुः महातिचारेण समागतः सन्पश्चात्क्रिय
माणैर्वक्रितः यदा पूर्वराशिं नो एति उत्तरराशिं नो एति नागच्छति तदा विलुप्ताब्दः लुप्तसंवत्सर उच्यते स लुप्तसंवत्सरः शुभकृत्ये अतिनिंदितः नि
षिद्धः उक्तं च अतिचारगतो जीवस्तं राशिं नैति चेत्पुनः लुप्तः संवत्सरो ज्ञेयो गर्हितः सर्वकर्मसु पद्यात् गोजांत्यकुंभेषु पूर्वराशेः सकाशान्महातिचा

14

वर्ज्यो नायं कोंकणे मागधे च गौडे सिंधौ वर्जनीयः शुभेषु ५२ गोजांत्यकुंभेतरभेतिचारेनो पूर्वराशिं गुरुरेति वक्रितः तदा विलुप्ताब्द
इहातिनिंदितः शुभेषु रेवासुरनिम्नगांतरे ५३ पादोनरेखापरपूर्वयोजनैः पलैर्युतो नास्तिथयोऽहिनाधतः ॥

रेखायाति पूर्वराशिं च नै

न
नितदा लुप्तसंवत्सरदोषः गुरुः मेषे वृषे तथैव कुंभे यद्यतीचारणे गुरुः न तत्र काललोपः स्यादित्याह भगवान्यमः दशमासभोगानंतरं अतीचारेपि लुप्ता
ब्ददोषो नास्ति च्यवनः मासान्दशैकादश वा प्रभुज्य राशेर्यदा राशिमुपैति जीवः भुक्तेन पूर्वं च पुनस्तथापि न लुप्तसंवत्सरमाहुरार्याः पूर्वराशिभेदेन परि
हारमुक्त्वेदानीं देशभेदेन परिहारमाह स लुप्तसंवत्सरो रेवा नर्मदा सुरनिम्नगा भागीरथी नयोर्नद्योरंतरे अतिनिषिद्धः उक्तं च लुप्ताब्ददोषो निमतेन म
ध्ये सोमोद्भवायाः सुरनिम्नगायाः इति नारदेन समस्तमासक दोषो विवाहवर्जितः समस्तदिग्गुरोः शुक्रस्तन्मासे तु प्रयत्नतः विवाहादि न कुर्वीत नर्मदातीरउ
तरे ५३ अथ वारसवृत्तिमुपजात्याह पादोनेति रेखा भूमध्यरेखा पुरी राक्षसी देवकन्या थकांचीत्यादिका लंकानगरारभ्य सुमेरुमस्तकदत्तसूत्राधो वर्तिरे

अथ सिंहस्थगुरोः प्रकारत्रयेण परिहारमुपेन्द्रवज्रयाह सिंहेगुराविति अथ प्रथमम् अंशभेदेन परिहारः सिंहस्थे गुरौ सत्यपि सिंहांशे सम्भ्रमत्रयोदशांशे १३। २० भोनंतरं सत्र्यंशमंशत्रयं ३।२० पंचमो नवांशः सिंहांशस्तत्र गुरौ सति विवाहो नेष्टः सिंहराशौ तु सिंहांशे यस्माद्भवति वाक्पतिः सर्वदेशे वर्जयेत् पाणिग्रहं पत्नी निधनप्रदः इति राजमार्तण्डोक्तेः। अतो वशिष्ठांशेषु विवाहादि शुभं भवतीत्यर्थः सिंहेपि मघादेवत्ये गुरौ उन्नतवती भवेत् अतोऽन्यत्र तु भगासाक्षी धनधान्य समृद्धिदेत्यादि तत्रैवोक्तेः अथ देशभेदेन द्वितीयपरिहार उच्यते अथ गोदोत्तरतः गोदावरीनदीतः स्याउत्तरतीरमारभ्य भागीरथीयाम्यतटं दक्षिणकूलमर्यादीकृत्य गोदावरीगंगान्तरालवर्ती यो देशः तत्र सिंहस्थगुरुर्वर्ज्यः नान्यदेशे तदुक्तं गोदावर्युत्तरतीरे यावद्भागीरथीतटं याम्यं तत्र विवाहो नेष्टः

सिंहे गुरौ सिंहलवे विवाहो नेष्टोऽथ गोदोत्तरतश्च यावत् भागीरथीयाम्यतटं च दोषो नान्यत्र देशे तपनेऽपि मेषे ४९ मघा
दिपंचपादेषु गुरुः सर्वत्र निन्दितः गंगागोदांतरं हित्वा शेषांघ्रिषु न दोषकृत् ५० मेषे वै केसन्व्रतो ह्याहे गंगागोदांतरे
पि च सर्वः सिंहगुरुर्वर्ज्यः कलिंगे गौडगुर्जरे ५१ रेवापूर्वे गंडकीपश्चिमे च शोणास्योदग्दक्षिणे नीच ईज्यः ॥ ० ॥

सिंहस्थे देवपतिः सूर्ये मेषगते गोदावरीदक्षिणतटे भागीरथ्युत्तरदेशे च सिंहस्थगुरुदोषो नास्ति वशिष्ठः भागीरथ्युत्तरे कूले गोतम्या दक्षिणे तथा विवाहो व्रतबंधो वा सिंहस्थेज्ये न दुष्यतीति अत्र वैवाहव्रतबंधावेव न निषिद्धौ आभ्यामन्यानि शुभकर्माणि निषिद्धान्येव अपवादस्संकोचात्र पत्नाद्युपलक्षणार्थो वा अथ तृतीयः परिहारः तथा नेष्टः मेषराशौ विद्यमाने सति वा सिंहस्थगुरोर्दोषो नास्ति ज्योतिर्निबंधे मंगलानीह कुर्वीत सिंहस्थो वाक्पतिर्यदा भानौ मेषगते सम्यगित्याहुः शौनकादयः इति ४९ सिंहराशिगतगुरु निषेधवाक्यानां प्रतिप्रसववाक्यानां च निर्गलितार्थमनुष्टुप्छन्दसाह मघादिपंचपादेषु स्यादि ५० मेषे वै [illegible] गुरोः प्रकारद्वयेन परिहारशालिन्याह रेवापूर्वे इति रेवायाः नर्मदायाः पूर्वदेशे गंडकी

मु०टी०
मु०प्र०
१५

अथ कालहोराप्रयोजनं शालिन्याह वारोक्तमिति यत्कर्म यस्मिन्वारेप्रोक्तं तद्दिने तस्य सदोषत्वाद्त्यावश्यकत्वेन तस्य कालहोरायां कार्यमेवं नारदः यस्य खेट
स्य यत्कर्म वारे प्रोक्तं विधीयते ग्रहस्य क्षण वारेपि तस्य तत्कर्म सर्वदा अत्र केचित् यस्य वारे कर्म प्रोक्तं तस्य बलिनो नवांशे लग्ने चंद्रे वा चेत्तिष्ठति तदा तत्क
र्म कार्यमित्याहुः उक्तं च यस्य ग्रहदिने कर्म यत्किंचिद्विधीयते यस्यांशसंस्थिते चंद्रे सूर्ये वा तद्विधीयते इति अथ धिष्ण्येन स्वत्रेयत्कर्म वस्त्रपरिधा
नादिकमुक्तं तदत्यावश्यकत्वे तस्य धिष्ण्यस्य स्वामितिथ्यंशके स्वामिनो मुहूर्ते कुर्यात् नारदः यस्मिन्नक्षे तु यत्कर्मनिखिलं कथितं च यत् तद्दैवत्ये तन्मुहूर्ते का
र्यं यात्रादिकं तथेति मुहूर्तस्वामिनो विवाहप्रकरणे वक्ष्यंते क्षणेषु मुहूर्तेषु दिक्शूलाद्यं दिक्शूलं वारशूलं नक्षत्रशूलं चिंत्यं विचारणीयं एवं पारिघो दंडः
क्षणेषु मुहूर्तेषु नैवोल्लंघ्यः दिक्शूलादिकमखिलं पारिघदंडादि विज्ञेयमिति वशिष्ठोक्तेः ५६ अथ मन्वादीन्युगादींश्च शार्दूलविक्रीडितेनाह मन्वा

वारोक्तं कालहोरासु तस्य धिष्ण्योक्तं स्वामितिथ्यंशके स्य कुर्याद्दिक्शूलादि चिंत्यं क्षणेषु नैवोल्लंघ्यः पारिघश्चापि दंडः ५६
मन्वाद्या स्युस्तिथी मध्यौ तिथिरवी ऊर्जे शुचौ दिक्तिथी ज्येष्ठेऽन्त्ये च तिथिस्त्रिलोचनवृतपस्यश्वाः सहस्ये शिवाः भाद्रेऽग्निश्च सिते त्व
माघ्न नभसः कृष्णे युगाद्याः सिते गोऽग्नी बाहुलराधयोर्मदनदर्शौ भाद्रमाघासिते ५७

द्यास्तिथिसिते शुक्लपक्षे एता मन्वादयः मधौ चैत्रे तिथी
तृतीयापौर्णिमे ऊर्जे कार्तिके तिथिरवी शुर्णिमा द्वादश्यौ शुचौ आषाढे दिक्तिथी दशमी पूर्णिमे ज्येष्ठे अन्त्ये फाल्गुने च तिथिः उभयत्र पूर्णिमैव वर्षे आश्वि
ने नवमी तपसि माघे अश्वाः सप्तमी सहस्ये पौषे शिवा एकादशी भाद्रपदे अग्निस्तृतीया पातु अस्मिन् नभसः श्रावणस्य कृष्णपक्षे अमावास्या अष्टमी
अथ युगाद्याश्चत्वारः बाहुलराधयोः बाहुलः कार्तिकः राधो वैशाखः तयोः शुक्लपक्षे गोऽग्नी नवमी तृतीये युगादि कार्तिकशुक्लनवमी कृतयुगादिः
वैशाखशुक्लतृतीया त्रेतादिः भाद्रमाघासिते मदनदर्शौ युगादि मदनस्त्रयोदशी दर्शोऽमावास्या भाद्रकृष्णत्रयोदशी कलियुगादिः माघकृष्णअ
मावास्या द्वापरादिः अत्र शुक्लादयो मासा ग्राह्याः कार्तिके शुक्लनवमी चादिः कृतयुगस्य सा त्रेतादिर्माधवे शुक्लातृतीया पुण्यसंमिताः कृष्णा पंचदशी॰

शास्तेमध्यरेखाशब्देनोच्यते यस्मिन्देशे वारप्रवृत्तिश्चिकीर्षिता स देशो रेखातः प्राक् पश्चिमे यावंति योजनानि भवंति तानि स्वचतुर्थांशोनानि कृत्वा तावद्भिः पलैः तिथ्यः पंचदशघटिकायुक्तोनाः कार्याः यदा मध्यरेखातः प्रत्यग्योजनानि तदा युक्ताः यदा तु प्राग्योजनानि तदोनाः कार्याः अथ यद्दिनेवा रप्रवृत्तिरिष्टा तद्दिवसे यद्दिनार्धं चरपलयुतहीनानाडिकाः पंचचंद्राः इत्यादिप्रकारसिद्धं तस्माद्दिनार्धात् संस्कारविशिष्टाः पंचदश ऊनाधिकाः स्युः ति तदा तद्विवरोद्भवैः पलैः दिनार्धस्य संस्कारविशिष्टपंचदशानां च यद्विवरं अंतरं तत्संबंधेनोत्थैरुत्पन्नैः पलैरूर्ध्वं तथाधो दिनपप्रवेशः यदा संस्कारविशिष्टाः पंचदश दिनार्धतश्चेदूना स्युस्तदा सूर्योदयादूर्ध्वं वारप्रवृत्तिः यदा संस्कारविशिष्टाः पंचदश दिनार्धतोऽभ्यधिकास्तदा सूर्योदयात्प्राक् वारप्रवृत्तिरित्यर्थः यथा वाराणसी रेखाभिधानात् कुरुक्षेत्रात् प्राक् त्रिषष्टियोजनानि ६३ पादोनचतुर्थांशेनोनानि ४७।१५ प्राग्योजनत्वादेतैः पलै

ऊनाधिकास्तद्विवरोद्भवैः पलैरूर्ध्वं तथाधो दिनपप्रवेशनं ५४ वाराद्याघटिकाद्विघ्नाः स्वाक्षह्रच्छेषवर्जिताः सैकास्तष्टा नगैः काल
होरेशा दिनपात्क्रमात् ५५

ऊनाः पंचदशघटिका जाताः १४।१२ दिनार्धं १६।३० अस्मान्न्यूना इति विवरं २।१७ तैनाभिर्घटीभिः सूर्योदयादूर्ध्वं वारप्रवृत्तिः यदा दिनार्धं १३।५० अस्मादधिका इति विवरं ०।२२ एताभिर्घटीभिः सूर्योदयात्प्राक् वारप्रवृत्तिरित्यर्थः ५४ अथ वारप्रवृत्तिप्रयोजनपुरःसरं कालहोरामनुष्टुभाह वाराद्येति वारप्रवृत्तिप्रकारेण यस्मिन्क्षणे वारप्रवृत्तिर्जाता ततः प्रभृति घट्यो द्विगुणाः कार्याः ताः स्वस्थाने स्थाप्याः तत्र पंचभिर्भक्तो यल्लब्धं तत्स्थाने स्थाप्यं यच्छेषं तत् द्विगुणघटीमध्ये वर्जितं कार्यं एवं विधाः घट्यः सैका एकयुक्ताः कार्याः सप्तभिस्तष्टाः अवशिष्टाः कालहोरेशाः स्युः ते दिनपात्वारात्क्रमाद्गणनीयाः यथा रविवारे इष्टघटिकाः ६ द्विगुणाः १२ पृथगक्षाः ५ तच्छेषं २ वर्जिताः १० सैका ११ नगैः ७ तष्टाः शेषं ४ रविवारे क्रमाद्गणनया चतुर्थो बुधस्तस्य होरा इत्यादि विवाहवृंदावने उदयमारभ्य होरा उक्ताः पश्चात्कालार्कन्यूनलग्नांशपिंडो भक्तः पंचक्षोणिभिर्भुक्तहोराः भास्वत्कुजेज्यौडसौरेज्यभौमाः संख्याये रन्धा रतस्ततदीशाः इति अन्यथा चैवधिमाणा वासिष्ठसंहितायां वारप्रवृत्तिविज्ञानं क्षणवारार्थमेव हि अखिलेष्वन्यकार्येषु ततु दिना

वृत्तिः अन्यकार्येषु दिक्शूलादिषु तिथिवारसंयुक्ते ध्रुवायोगे
तु च सूर्योदयाद्देववारो ग्राह्यः ५५

दिरुदयाद्यवेनक्षणवारः कालहोरारूपः तदर्थं वारप्र

मु॰टी॰ न॰प्र॰ १६ अथाधोमुखोर्ध्वमुखतिर्यङ्मुखनक्षत्राणि इन्द्रवज्रयाह मूलाहीति मूलं अहिमाश्लेषा मिश्रं कृत्तिका विशाखे उग्रं पूर्वात्रयमघाभरण्यः एतानि नवभानि
अधोमुखानि ज्ञेयानि आर्द्रापुष्यः श्रवणत्रयं रोहिण्युत्तरात्रयं च नवभान्यूर्ध्वमुखानि मैत्रादिति चित्रा रेवत्यनुराधाः हस्तस्वातीपुनर्वसुज्येष्ठा अश्विन्यः ए
तानि नवभानि तिर्यङ्मुखानि एषु अधोमुखोर्ध्वमुखतिर्यङ्मुखेषु भेषु ईदृशं कृत्यं अधोमुखोर्ध्वमुखतिर्यङ्मुखकृत्यं सत् भवति गरुडपुराणे भरणीकृ
त्तिकाश्लेषामघामूलविशाखिकाः तिस्रः पूर्वास्तथा चैव अधोवक्त्राः प्रकीर्तिताः एषु वापीतडागादिकूपभूमितृणानि च देवागारस्य खननं निधानखननं
तथा गणितं ज्योतिषारंभे खनी विलप्रवेशनं कुर्यादधोगतान्येव कार्याणि वृषभध्वज रोहिण्यार्द्रा तथा पुष्यो धनिष्ठा चोत्तरात्रयं वारुणं श्रवणं चैव नव
चोर्ध्वमुखास्तथा एषु राज्याभिषेकं च पट्टबन्धं च कारयेत् ऊर्ध्वमुखान्युक्तानि सर्वाण्येषु च कारयेत् रेवती चाश्विनी चित्रा स्वाती हस्तः पुनर्वसुः अनुरा

16

मूलाहिमिश्रोग्रमधोमुखं भवेदूर्ध्वास्यमार्द्रेज्यहरित्रयं ध्रुवं तिर्यङ्मुखं मैत्रकरानिलादितिज्येष्ठाश्विनानीदृशकृत्यमेषु सत् ९ यो
ऽसध्रुवाश्विकरपंचकवासवेज्यादित्येप्रवालरदशंखसुवर्णवस्त्रं ॥

धाम्न्यो ज्येष्ठा एतास्तिर्यङ्मुखाः स्मृताः गजोष्ट्राश्वबलीवर्ददमनं मा
हिषस्य च बीजानां वपनं कुर्याद्गमनागमनादिकं चक्रयंत्ररथादीनां नावादीनां प्रवाहणं पार्श्वेषु यानि कार्याणि कुर्यादेषु च तान्यपि इदं च नक्षत्रविशेषः
विहितानां कर्मणामावश्यकत्वे व्यत्वे मुहूर्तोलभ्यो सत्पाकर्मणः अधोमुखाद्याकारं ज्ञात्वा तत्तन्नक्षत्रेषु तानि कर्माणि कार्याणि यानि च सर्वथानोक्ता
नि विलप्रवेशादीनि तान्येष्वेव नक्षत्रेषु कार्याणीत्येतदर्थमुक्तं ९ अथ प्रवालादिधारणमुहूर्तं वसंततिलकेनाह पौष्णध्रुवेति रेवत्यादिनक्षत्रेषु तथा
रिक्तातिथिशनिवर्जं भौमवर्जेऽन्यदिने प्रवालं विद्रुमं शंखः शंखवलयादि वस्त्रं श्वेतं एतानि धार्याणि रक्तं मंजिष्ठादिरंगेन रंजितं वस्त्रं भौमवारे
पि धार्यं अथ सुभगाः सभर्तृका ध्रुवादितियुगे रोहिण्युत्तरात्रयेषु अदितियुगे पुनर्वसौ पुष्ये च प्रवालादिकं न दध्यात् कचिच्छन्नतारायां तानमपि न विद्धं। राम॰ १६

सैवत्रयोदशीति नारदोक्तेः ५७ इति श्रीदैवज्ञानन्तसुतदैवज्ञरामविरचितायां स्वकृतमुहूर्तचिंतामणिटीकायां प्रमिताक्षरायां शुभाशुभप्रकरणं समाप्तं १ अथ
नक्षत्रप्रकरणं व्याख्यायते तत्रादौ नक्षत्रस्वामिनः शार्दूलविक्रीडितेनाह नासत्येति एतेनासत्यांतकादयः क्रमेणाश्विन्यादिनक्षत्रेशाः क्रमात्स्युः १ अथ ध्रुव
नक्षत्राणि तत्कृत्यं चानुष्टुभाह उत्तरात्रयेति उत्तरात्रयं रोहिणी चैतानि नक्षत्राणि रविवारश्च ध्रुवसंज्ञानि स्थिरसंज्ञानि चेति संज्ञाद्वयं एवमुत्तर
त्रापि व्याख्येये ध्रुवनक्षत्रेषु स्थिरादिकर्म कार्यं आदिग्रहणान्मृदुनक्षत्रोक्तं यास्यं वसिष्ठः मृदुवर्दकथितान्यपि स्थिरखंडेनानि कार्याणि इति २

नासत्यांतकवह्निधातृशशभृद्रुद्रादितीज्योरगाः ऋक्षेशाः पितरो भगोर्यमरवीत्वष्टासमीरः क्रमात् शक्राग्नी खलु मित्र इंद्रनिरृति
क्षीराणि विश्वे विधिर्गोविंदो वसुतोयपाजचरणाहिर्बुध्न्यपूषाभिधाः १ उत्तरात्रयरोहिण्यो भास्करश्च ध्रुवं स्थिरं तत्र स्थिरं वीज
गेहशांत्यारामादिसिद्धये २ स्वात्यादित्ये श्रुतेस्त्रीणि चंद्रश्चापि चरं चलं तस्मिन्गजादिकारोहो वाटिकागमनादिकं ३ पूर्वात्रयं
याम्यमघे उग्रं क्रूरं कुजस्तथा तस्मिन्घाताग्निशाठ्यानि विषशस्त्रादि सिध्यति ४ विशाखाग्नेयभे सौम्यो मिश्रं साधारणं स्मृतं
तत्राग्निकार्यं मिश्रं च वृषोत्सर्गादि सिद्धये ५ हस्ताश्विपुष्याभिजितः क्षिप्रं लघु गुरुस्तथा तस्मिन्पण्यरतिज्ञानभूषाशिल्पकला
दिकं ६ मृगांत्यचित्रामित्रर्क्षं मृदु मैत्रं भृगुस्तथा तत्र गीतांवरक्रीडामित्रकार्यविभूषणं ७ मूलेंद्रार्द्राहिभं सौरी तीक्ष्णं दारुणसं
ज्ञकं तत्राभिचारघातोग्रभेदाः पशुदमादिकं ८ अथ चरभानि तत्कृत्यं चानुष्टुभाह स्वात्यादित्येति आदिशब्दात्तल्लघुनक्षत्रोक्तमपि ३ अथो
ग्रनक्षत्राणि चानुष्टुभाह पूर्वात्रयमिति आदिशब्दाद्दारुणनक्षत्रोक्तमपि ४ अथ मिश्राण्यनुष्टुभाह विशाखेति आदिग्रहणादुग्रोक्तमपि ५ अथ
लघुनक्षत्राण्यनुष्टुभाह हस्तेति शिल्पं वर्धकिविकृत्यादि कलानृत्यादिकाश्चतुःषष्टिः आदिशब्दाच्चरभोक्तमपि ६ अथ मृदुनक्षत्राण्यनुष्टुभा
ह मृगांत्येति ७ अथ तीक्ष्णभान्यनुष्टुभाह मूलेति अभिचारः कर्मणां मयं कारकृत्यं मारणादि पशुदमः पशुशिक्षा आदिशब्दात्वधनादिकं। मु. चि.

मु०टी० न०प्र० १७

अथ लतापादपारोपणराजदर्शनमघगोविक्रयमुहूर्तान्वसन्ततिलकेनाह राधामूलेतिराधाविशाखाएतदादिचतुर्दशनक्षत्रैर्लतानांवल्लीनांपादपानांवृक्षाणांचारोपोवापनंकार्यः अथराजदर्शनंध्रुवमृदुक्षिप्रश्रवोवासवैः त्रयोदशभैः कार्यं अथमघमघारंभः तीक्ष्णोग्रध्रुवपभेषुनवनक्षत्रेषु उदितः कथितः अथगवांक्रयोमूल्येनपरस्माद्ग्रहणं विक्रयोमूल्यग्रहणपूर्वकंदानं क्षिप्रांत्यवन्हीडुभादित्यद्वीध्रुवपवासवेषुहिनवनक्षत्रेषु शस्तः प्रशस्तः अत्रभीमपराक्रमेणपंचदशभान्यभिहितानि हस्तानुराधात्रितयेसपौष्मेमृगेचपूर्वाश्विविशाखमेषु पुष्येधनिष्ठाद्वितयेदितीशेगवांक्रयंविक्रयमामनंतीति १२ अथपशूनांरक्षामुहूर्तस्थितिनिवेशननिषेधमुहूर्तेचेंद्रवज्रयाह लग्नेशुभ इति शुभेशुभस्वामिकेलग्नेअष्टमशुद्धिसंयुतेशुभपापाक्रांताष्ट

निद्येपिधिष्ण्येवारादेवस्त्रंधार्येजगुर्बुधाः १२ राधामूलमृदुध्रुवर्क्षवरुणक्षिप्रैर्लतापादपारोपोयोनृपदर्शनंध्रुवमृदुक्षिप्रश्रवोवासवैः तीक्ष्णोग्रध्रुवपभेषुमघमुदितंक्षिप्रांत्यवन्हीडुभादित्यद्वीध्रुवपवासवेषुहिगवांशस्तःक्रयोविक्रयः १२ लग्नेशुभेवाष्टमशुद्धिसंयुतेरक्षापशूनांनिजयोनिभेवरे रिक्ताष्टमीदर्शकुजश्रवोध्रुवत्वाष्ट्रेषुयानंस्थितिवेशनंनशत् १४

मभावरहितेसतिपशूनांरक्षारक्षणंप्रवेशादिकंचसत् तथास्वीययोनिनक्षत्रेचरभेचसत् यथाऽश्वानांयोनिभेअश्विनीशततारके तत्रचतुष्पदानांरक्षाशस्ता तीक्ष्णेपशूनांदमनेचरंस्यात्पशुपोषणमितिवचनात् अथरिक्ता ४।९।१४ अष्टमी ८ दर्शोमावास्याः कुजोभौमः श्रवःश्रवणं ध्रुवाःउत्तरात्रयरोहिण्यः त्वाष्ट्रंचित्राएषुपशूनांयानंगृहाद्बहिर्निःसारणंस्थितिगोष्ठादिवेशनंनसत् शुभंनव्यवहारोत्रये पूर्वोत्तरेयेधनिष्ठेद्रपौष्णेसौम्यविशाखयोः आश्लेषायामश्वाश्विन्यांयात्रासिद्धिश्चतुष्पदामिति १४ श्रीरामचंद्रायनमः ॥ रामः रामः रामः ॥ ॥ ॥ रामः ॥ रामः ॥ ॥ ॥ ॥ रामः ॥ रामः ॥० रामः १७

उक्तंच रोहिणीगुरुपुनर्वसूत्तरेयाविभर्तिनववस्त्रविभूषणं सानयोविरलबनेपतिंस्नानमाचरतिवारुणेपियाइति १० अथनवधाविभक्तस्यवस्त्रस्यदग्धादिदोषेशुभाशुभफलंशार्दूलविक्रीडितेनाह वस्त्राणामिति वस्त्राणांनवभागाःकार्याःकोणचतुष्टयेअमरादेवाःस्थाप्याःराक्षसामध्यगतांशगताज्ञेयाःनराःदशासदितिपार्श्वेचपुनर्मध्ययोरंशयोर्ज्ञेयाः तत्रचेदूर्ध्वांशेनवततरेल्पतनेवस्त्रेदैवादग्धेअग्निस्पृष्टे।स्फुटितेपाषाणाघाघातादिभिर्निर्हतेपंकेनकर्दमेनआदिशब्दात्गोमयादिभिर्लिप्तेपहनेसतितद्वस्त्रंनसत्शुभफलजनकंनभवतीत्यर्थःनसुरांशयोःएवंवस्त्रदाहादिकेसतिशुभंकल्याणंस्यात् अथसर्वांसकेराक्षसमनुष्यदेवांशकेषुप्रांततःप्रांतभागेअसदनिष्टफलगमकंइदंसर्वेशय्यापादुकास्वपिज्ञेयंश्रीपतिःकज्जलकर्दमगोमय।

धार्येविरिक्तशनिचंद्रकुजेन्हिरक्तंभौमेध्रुवादितियुगेसुभगानरध्यात् १० वस्त्राणांनवभागकेषुचचतुःकोणेमरााराक्षसामध्येत्र्यंशगतानरास्तुसदशेपार्श्वेचमध्यांशयोः दग्धेवास्फुटितेवरेनवतरेपंकादिलिप्तेनसदूर्ध्वांशेनसुरांशयोःशुभमसत्सर्वांशकेप्रांततः ११ विप्राज्ञयातथोद्वाहेराज्ञाप्रीत्यार्पितेचयत् ॥

लिप्तेवासिदग्धवतिस्फुटितेचचिंत्यमिदंनवधाविहिते स्निग्धमनिष्टफलंचसुधीभिः

अत्रराक्षसांशेध्वजछत्रादिसदृशीछेदाकृतिशुभफलाज्ञेया देवमनुष्यांशेपिकाकोलूकसदृशीछेदाकृतिरशुभफलदा कश्यपः शंखचक्रांबुजछत्रध्वजतोरणसन्निभा श्रीवत्सवर्धनोभद्रनंद्यावर्तगृहोपमा वर्धमानस्वस्तिकेभमृगकूर्मझषाकृतिः छेदाकृतिर्दैत्यभागेप्यायुरर्थप्रदानृणांखरोष्ट्रोलूककाकादिजंबूकश्ववकोपमा त्रिकोणःस्वर्याकृतयोदेवभागेप्यशोभनाः निंदितंवसनंदद्याद्विजेभ्यःस्वर्णसंयुतं आशिषोवाचनंकृत्वात्वन्यद्वस्त्रंचधारयेदिति ११ अथकचिदुष्टदिनेपिवस्त्रपरिधानमनुष्टुभाह विप्राज्ञयेति धिष्ण्यनक्षत्रवारादौवारतिथियोगादौव्यतीपातभद्रादिदुष्टयोगेनिंद्येपियद्वस्त्रंब्राह्मणानुज्ञयातथोद्वाहेराज्ञासंतोषेणार्पितंदेवचंद्रवस्त्रंधार्यमितिवचनगुः १२

मु०टी० अथविक्रयविपण्योर्मुहूर्तंशार्दूलविक्रीडितेनाह पूर्वाद्रीशेतिद्वीशंविशाखा पूर्वादिनक्षत्रेषु केंद्रेषुप्रथमचतुर्थसप्तमदशमेषुद्वितीयेकोणेनवपंचमेषुभैःसद्भिः
न०प्र० षट्त्र्यायेषुपापग्रहैःसद्भिः घटतनुंकुंभलग्नंविनात्यक्तासत्तिथौरिक्तामारहिततिथौविक्रयःसन्शुभोज्ञेयः अथविपणिःपण्यवीथिकागृहेस्थित्वा
१८ क्रयविक्रयात्मकंकर्म रिक्तातिथिभौमवारकुंभलग्नानिवर्जयित्वान्येषुतिथिवारलग्नेषुमित्राणिमृगरेवतीचित्रानुराधाःध्रुवाणिरोहिण्युत्तरात्रयंक्षि
प्राणिहस्ताश्विपुष्याःएतैर्भैः लग्नेचंद्रेस्थितेमृत्तौचंद्रेस्थितेचसतिव्ययाष्टरहितैःपापग्रहैःसद्भिःशुभैर्धायखेद्वितीयेकादशदशमेषुसद्भिर्विपणिःशु
भास्यात् १७ अथाश्वगजमुहूर्तमिंद्रवज्रयाह क्षिप्रांत्येति क्षिप्रादिनक्षत्रेषुरिक्ताभौमव्यतिरिक्तदिनेवाजिकृत्यमश्वानांक्रयविक्रयशिक्षास्याना
भरणादिकार्यंप्रशस्तंस्यात् श्रीपतिः पुष्यश्रविष्ठाश्विनसौम्यभेषुपौष्णानलादित्यकराह्वयेषु सवासरांशेषुबुधैःस्मृतानिसर्वाणिकार्याणितुरंगमा

18 पूर्वाद्रीशककृशानुसार्पयमभेकेंद्रद्विकोणेशुभैःषट्त्र्यायेष्वशुभैर्विनाघटतनुंसत्विक्रयःसत्तिथौ रिक्ताभौमघटान्वितांचविपणिर्मि ना
त्रध्रुवक्षिप्रभैर्लग्नेचंद्रस्थितेव्ययाष्टरहितैःपापैःशुभैर्ध्यायखे १७ क्षिप्रांत्यवस्विंदुमरुज्जलेशादित्येष्वरिक्तारदिनेप्रशस्तं स्या
द्वाजिकृत्यंत्वथहस्तिकृत्यंकुर्यान्मृदुक्षिप्रचरेषुविद्वान् १८ स्याद्भूषाघटनंत्रिपुष्करचरक्षिप्रध्रुवेरत्नयुक्तत्तीक्ष्णोग्रविहीनभेर
विकुजेमेषालिसिंहेतनौ ॥

३४

णां अश्वारोहणेचक्रं अश्वाकारंलिखेच्चक्रंसाभिजिज्ञानिविन्यसेत् स्कंधेतुत्रयंभान्यपृष्ठेचदशभानिच पुच्छेद्वेस्थापयेन्मानश्चतुष्पादेचतुष्टयं उदरे
विन्यसेत्पंचमुखेद्वेतुरगस्यच अर्थलाभोमुखेसम्यक्वाजीनश्यतिचोदरे चरणस्थेरणेभंगःपुच्छेपत्नीविनश्यति अर्थसिद्धिर्भवेत्पृष्ठेस्कंधेस्कंधपति
र्भवेत्इति अथविद्वान्ज्ञाताम्रदुक्षिप्रचरनक्षत्रेषुरिक्तामाभौमवर्जितदिनेचहस्तिकार्यंगजानांक्रयविक्रयभूषादिकुर्यात् वसिष्ठः हस्तत्रयेसौम्य
हरित्रयेचपौष्णद्वयेपुष्यपुनर्वसौच मैत्रेचसर्वाण्यपिकुंजराणांकर्माणिशस्तान्यखिलानियानीति १८ अथभूषणघटनेमुहूर्तंशार्दूलविक्रीडितेनाहस्या

अथौषधस्य मुहूर्तं मंदाक्रांतयाह मैत्रज्येत्यादि मैत्रज्ये श्रौषधं प्राश्यं भक्षितं च सतं लघुमृदुचरनक्षत्रे मूले च द्व्यंगलग्ने द्विस्वभावराशिषु मिथुनक न्याधनुर्मीनेषु लग्नगतेषु सत्सु शुक्रेंदीज्यबुधेषु द्विस्वभावलग्नस्थेषु सत्सु वेषु न तेषां शुक्रेंदीज्यबुधानां रवेश्च दिवसे वारे सति यौरी कुमारहित तिथौ मैत्रज्ये सतं शुभं स्यात् दीपिकायां द्व्यंगोदये गुरुबुधेंदुसितैः प्रशस्तैस्तेषां रवेश्च सुदिनेषु तिथौ सुयोगे मैत्र्यपञ्चगविशाखजोषेवरेषु जन्मसं ज्ञित्रहितेषु कुत्रः शुभायेति अथ रिःफयुनमृतिगृहे लग्नात् द्वादशसप्तमाष्टमगृहेषु शुद्धेषु शुभपापग्रहरहितेषु सत्सु श्रौषधेनुवक्ष्यफलप्रश्नादि ना श्रायुर्निश्चये वसतः यूनशत्रुनिधनव्ययषष्ठोसद्गृहेषु निनरांबलवत्सु श्रायुष्यस्वहितकारिणि योगे कीर्तितानि पतत्यौषधसेवेति श्रीपतिभट्टोक्तेः अथ जन्मभे जन्मनक्षत्रेनौ मैत्रज्येत्सत जन्मनक्षत्रगस्त्वेदुः प्रशस्तः सर्वकर्मसु क्षौरभैषजवादाध्वकर्तनेषु विवर्जयेदिति वचनात् अथ स्त्रीकर्म

मैत्रज्ये स्त्रलघुमृदुचरे मूलभे द्व्यंगलग्ने शुक्रेंदीज्ये विदिच्च दिवसे चापि तेषां रवेश्च शुद्धे रिःफद्युनमृतिगृहे सति यौनो जनेभैः स्त्रीक ॥
र्माप्यदितिवसुभेत्वाष्ट्रमित्राश्विपुष्ये १५ क्रयर्क्षे विक्रयो नेष्टो विक्रयर्क्षे क्रयोपि न पौष्णांबुपाश्विनीवातःश्रवश्चित्राः क्रये शुभाः ॥१६

स्त्र्याः संबंधिकर्म घटनसीवनादि श्रदितिवसुभत्वाष्ट्रमित्राश्विपुष्यनक्षत्रेसत्स्यात् व्यवहारोच्चये श्रदितिवोसवंत्वष्ट्रमैत्रभेदस्ववाजिनः स्त्रीकर्म तनुत्राणामेभिर्नक्षत्रैः प्रशस्यत इति १५ अथान्यदप्याह क्रयर्क्षे इति क्रयर्क्षे वक्ष्यमाणक्रयनक्षत्रे विक्रयो न कार्यः तथा विक्रयनक्षत्रे क्रयोपि न कार्यः दीपिकायां यमाहिशक्राग्निविशाखपूर्वानेत्राः क्रये विक्रयरोनि शस्ताः पौष्णाश्विचित्राशततिष्यवानाः शस्ताः क्रये विक्रयरोनिषिद्धा इ ति ननु एकदायेन क्रयः कर्तव्यस्तदान्येन विक्रयः कर्तव्यस्तत्रक्रयविक्रयनक्षत्राणां महाभेदादुभयविधमुहूर्तानुपपत्तिः उच्यते विक्रेता यदा शुद्धमुहूर्ते विक्रयार्थं गच्छति तदा वस्तुपृथक्क्रियते तत्कर्मविक्रयशब्दवाच्यं यदा क्रयिणा क्रयार्थं मुहूर्ते प्राप्ते तदा विक्रेत्रे मूल्यद्रव्यं दत्वा पृथक्कृतं विक्रेतृवस्तु गृह्णाति तत्क्रयशब्दवाच्यमिति मत्वा यथाकथंचित् समाधेय तत्क्रयमुहूर्तः रेवतीशततारकाश्विनीस्वातीश्रवणाचित्राएतानि भानि क्रयेशुभानि विक्रय

मु॰टी॰ वेवसुर्धनिष्ठा हयोश्विनी दिनकृत् हस्तः तस्मात्पंचके हस्तचित्रा स्वाती विशाखानुराधासु आदित्यं पुनर्वसुः पुष्ये वस्त्राणां क्षालनं रजकाधानार्थं दानं सत्
न॰प्र॰ शुभं स्यात् रिक्तापर्वाणि पूर्वोक्तानि तिथिप्रकरणे षष्ठीपितृदिनं श्राद्धदिनं एतेषु रविजशेषु शनिवुधवारेषु कदापि वस्त्रक्षालनं नो कार्यं २० अथ खड्गा
१९ दिधारणं शय्याद्युपभोगमुहूर्तं च खड्गधरणाह संधार्याऽइति विरिक्ते रिक्तावर्जितशुक्रवृहस्पतिरविवारे तथा मैत्रध्रुवलघुसंज्ञकनक्षत्रसहितपुनर्वसुज्येष्ठावि
शाखानक्षत्रेषु कुंतादयः संधार्याः कुंतो भल्लः वर्मकवचं इषवो वाणाः आस्यते अनेनेति आसनं धनुः शरो वाणः कृपाणः खड्गः असिपुत्री छुरिका सन्नाहो पी
तिके चित् तथा स्थिराख्ये वृषसिंहवृश्चिककुंभाख्ये लग्ने चंद्रे अपि शब्दाच्च लग्नेपि शुभग्रहदृष्टे शुभैः केंद्रगैः सद्भिः कुंतादिधारणं हितं कर्षोच्चापे पुष्ये

वस्त्राणां क्षालनं सद्वसुहयदिनकृत्पंचकादित्यपुष्ये नो रिक्तापर्वषष्ठीपितृदिनरविजशेषु कार्यं कदापि २० संधार्याः कुंतवर्मेषुसन
शरकृपाणासिपुत्र्यो विरिक्ते शुक्रेज्यार्केऽह्नि मैत्रध्रुवलघुसहितादित्यशाक्राह्निदैवे स्युर्लग्ने हि स्थिराख्ये शशिनि च शुभदृष्टे शुभैः कें
द्रगैः स्याद्भोगः शय्यासनादेर्ध्रुवमृदुलघुहर्यंतकादित्यरक्षः २१

29

चादितिचित्रपश्चतनयेशक्रोत्तरारेवतीवाजीहस्तविशाखमित्रसहितेभानौ
गुरौ भार्गवे कुंभेकीटमृगेहवृषेमृगपतौ चंद्रे शुभैर्वीक्षिते संनाहं शरखड्गकुंतछुरिकाधार्यो नृपाणां हितेति मनुदीपिकायां मूलेंद्रश्रवोत्रयपाम्यपित्र्यशाक्रा
श्विसर्पानलभ्रूलिनक्ष्य शय्यादिसंधारणमेषु कुर्यान्नित्यो विलग्ने च शुभे शुभाहे इति तदासन्नपुत्राद्दिविषयं अथ ध्रुवमृदुलघुनक्षत्रेषु हरौ श्रवणे अं
तके भरण्यां आदित्ये पुनर्वसौ रक्षशिरे यासनादेः शय्याः खट्वादिरूपा आसनं पीठमगल्वगादि आदिशब्दात्पादुकातैलानुपभोगः इष्टः हितः दीपिका रा॰म॰
यां मैत्रेंद्रपुष्यपमभाग्दितिवह्निचित्राहस्तोत्तरात्रयहरीज्यविधातृभानि एतेषु तीव शयनासनपादुकानां संभोगकार्यमुदितेषु तिथिभिः शुभाहे इति २१ ॥ १९

द्भूषेति त्रिपुष्कर दिने लक्षणं भद्रातिथौ रविजेत्यादि नानक्षत्रे एवं विधे त्रिपुष्करदिने वरक्षिप्रध्रुवनक्षत्रेषु भूषाघटनमाभरणघटनं शुभं स्यात् वसिष्ठः क्षिप्राचल
चरक्षेष्वरिक्तामावर्जितेषु दिवसेषु निखिलेष्वपि वारेष्वपि त्रिपुष्करे भूषणं कार्यं अथ तद्भूषणं रत्नयुतं माणिक्यादियुतं चेत्तदा तीक्ष्णोग्रविहीनभेतीक्ष्णानि
मूलज्येष्ठाद्राश्लेषाख्यानि उग्राणि पूर्वात्रयमघाभरण्यः एतद्वर्जितेषु षष्ठाद्दशनक्षत्रेषु तथा रविभौमवारेऽपि कार्यं तथा मेषवृश्चिकसिंहलग्नेषु च
वसिष्ठः स्थिरसाधारणाचरभे लघुमैत्रे धर्केकुजवारे तेषामेव विलग्ने माणिक्यमयभूषणं कार्यमिति कर्कवृषतुलालग्नेषु कार्यमित्यपि ज्ञेयं वसिष्ठः
क्षिप्रमृदुध्रुवचरभे शशिसितयोर्वासरेषु तल्लग्ने मुक्ताफलरजतमयं भूषणमखिलं सवज्रकं कार्यं अथ तीक्ष्णानि मूलज्येष्ठाद्राश्लेषाः उग्राणि पूर्वात्रय
भरणीमघा अश्विनीमृगौ द्विदैवं विशाखा दहनः कृत्तिका एषु नक्षत्रेषु घटितं शस्त्रं शुभं स्यात् अदितिर्वासव त्वष्टामैत्रमैंद्रवाजिनिः सूचीकर्मन

तन्मुक्तासहितं चरध्रुवमृदुक्षिप्रे शुभे सत्तनौ तीक्ष्णोग्राश्विमृगा द्विदैवदहने शस्त्रं शुभं यद्दिने ॥ १९ ॥ मुद्राणां पातनेसध्रुवमृदुचरभक्षिप्रभै
वींदुसौरे घस्रे पूर्णाजयाख्ये न च गुरुभृगुजास्ते विलग्ने शुभैः स्यात् ॥ उद्राणमेभिर्न्नक्षत्रैः प्रशस्यत इति ऋक्षोच्चयोक्तेः अथ सुवर्णरूप्यादिपात्रेभो
जनमुहूर्तमाह वसिष्ठः लघुमैत्रध्रुवचरभे सितेंदुबुधजीववारेषु हेमरजतादिभाजनभोजनमारोग्यामृतयोगेषु इति १९ अथ मुद्रापातनमुहूर्तं वस्त्रक्षा
लनमुहूर्तं च स्रग्धरयाह मुद्राणामिति ध्रुवमृदुचरक्षिप्रसंज्ञकेनक्षत्रैः कृत्वा राजमुद्रां किंतु सुवर्णरूप्यादि निष्पादनं मुद्रापातनमित्युच्यते टंकसाले
ति भाषया वींदुसौरे घस्रे चंद्रशनैश्चरवाजितवारे तथा पूर्णाजयाख्ये पूर्णाः पंचमीदशमीपूर्णिमाः जयास्तृतीयाष्टमीत्रयोदश्यः एतासु तिथिषु
त्यर्थः शुभं स्यात् तथा गुरुशुक्रास्तेन शुभं विलग्ने शुभैः लग्ने शुभग्रहैः सहितेत्यर्थः उक्तं च मृदुध्रुवक्षिप्रचरेषु भेषु योगे च शस्ते शनिचंद्रवर्ज्ये वारे
ति थौ पूर्णाजयाख्ये च मुद्राप्रतिष्ठा शुभदा [illegible] नाम मुद्राणां घटनं कुर्वीत [illegible] शलग्नेन कार्यं भ्रनिमिकृत्ता अथ धु

मु० टी० धिबुधे वा सति स्थिरदशमे भृगौ शुभे सति आप्ये जलराशौ विधौ सति सर्वेषां जलाशयानां वापीकूपतडागादीनां तोयाधाराणां खननं हितं स्यात् आप्यांशुपांत्यपित्
न० ३० मित्रवसून् राकेन्द्वीज्यमेषु खननं सलिलाशयानामिति व्यवहारतत्त्वोक्तेः श्रीपतिः लग्ने जीवे ऽर्थ यवाद्ध्वे लेश्मकूरैः शुक्रे वापि मेषुरराशौ आप्ये चंद्रे स
२० वेतोयाशयानामारंभाः स्युः सिद्धये निर्विकल्पमिति अथ खनत्यारंभः तेःसाशुनैर्नक्षत्रैर्व्योमभोमध्येः पूर्वाषाढामघारहितैः सेंद्रभैः ज्येष्ठासहितैः मित्रार्क
ध्रुववासवांबुपांत्यपुष्येंदुज्येष्ठानक्षत्रैः खनत्यारंभः शुभः स्यात् शुभैर्हिबुके चतुर्थस्थाने लग्ने इत्यसति अजेचेंद्रे त्राशौ मिथुनकन्यास्थे सतीत्यर्थः २५
अथ सेवकस्य स्वामिसेवायां मुहूर्तं शालिन्याह क्षिप्रेति क्षिप्राणि हस्ताभिजिदश्विपुष्याः मैत्राणि मृगरेवतीचित्रानुराधाः एतेषु नक्षत्रेषु बुधशुक्रसूर्य
गुरुवारे सौम्ये शुभग्रहे लग्नगे सति अर्के भौमे वा खेलाभे दशमे एकादशे च स्थिते सति सेवकेन स्वामिनः सेवा कार्या तत्र स्वामिसेवकनक्षत्रयोर्योर्मै

20

आप्ये सर्वजलाशयस्य खननं व्योमो मघैः सेंद्रभैः स्तैर्नत्यं हिबुके शुभे स्तनुगृहे ज्ञे ऽजेऽत्रराशौ शुभं २५ क्षिप्रे मैत्रे वित्सितार्केज्यवारे सौ
म्ये लग्ने ऽर्ककुजे वा खलाभे योनेर्मैत्र्यां राशिपोश्चापि मैत्र्यां सेवा कार्या स्वामिनः सेवकेन २६ स्वात्यादित्यमृदुद्विदैवगुरुभे कर्ण
त्रयाश्वे चरे लग्ने धर्मसुताष्टशुद्धिसहिते द्रव्यः प्रयोगः शुभः ॥

ख्यां च पुनः राशिपोः सेव्यसेवकयो राशिस्वामिनोर्मैत्र्यां सत्यां सेवा कार्या अ
न्यथा न कार्या २६ अथ द्रव्यप्रयोगकरणग्रहणमुहूर्तं शार्दूलविक्रीडितेनाह स्वात्यादित्येति स्वात्याद्येकादशनक्षत्रेषु चरमेषकर्कतुलामकरराशीनामन्य
तमे लग्ने धर्मे नवमे सुतः पंचमे अष्टमे एतेषां शुद्धिः नवपंचमयोः पापग्रहराहित्यं अष्टमे तु शुभपापराहित्यमेव एवं शुद्धिसहिते लग्ने द्रव्यप्रयोगः
करणादानं शुभं स्यात् भीमपराक्रमे मृदुपुष्याश्विनीचैव विशाखाश्रवणात्रयं पुनर्वसौ च शंसंति धनादिनिक्षिप्तवर्तनं वर्तनमृणादिस्सेरादानं मिश्रन
क्षत्राहि शाखायां निषेधमाह करणादाने एवं विधिः हस्ते नक्षादौ निषिद्धे वसुतेऽधमो जन्मधने वर्च विलग्ने द्रविणप्रयोगः इति अथारे भौमवारे राम:
करणानग्राह्यं ऋणं भौमे न गृह्णीयात् दद्यात् बुधवासरे ॥ ऋणच्छेदं कुर्यात् चयमानंदने अथ रविशब्दे संक्रमे संक्रांतिदिवसे वृद्धौ वृद्धियोगे करणे २०

अथाधोदिनक्षत्राणि शार्दूलविक्रीडितेनाह अधाक्षमिति धातारोहिणी विधिरभिजित् दहनः कृत्तिका भगः पूर्वाफाल्गुनी अन्यत्स्पष्टं २२ अधादिनक्षत्रा णां फलमनुष्टुभाह विनष्टार्थेइति अधनक्षत्रेषु विनष्टस्यापहृतस्यार्थस्य लाभः शीघ्रं भवति मंदनक्षत्रेषु विनष्टार्थस्य प्रयत्नतो लाभो भवति मध्यमध्य नक्षत्रे विनष्टार्थस्य दूरे स्वनगरादन्यत्र दूरदेशे श्रवणं त्वदीयद्रव्यममुकेन हृतं अमुकस्थलेऽस्तीति लोकवार्ता भवति लब्धिस्तु नास्ति सुलोचननक्ष त्रेषु श्रुत्याप्तीन श्रवणमपि लब्धिरपि न भवतीत्यर्थः २३ अथ धनप्रयोगे निषिद्धनक्षत्राण्यनुष्टुभाह तीक्ष्णेति एतैस्तीक्ष्णादिनक्षत्रैर्यद्द्रव्यं सुवर्णादि दत्तं कालांतरं विना दत्तं न स्वस्वत्वापरित्यागेन निवेशितं स्वसमीपेऽन्यत्र यार्थं स्थापितं प्रयुक्तं कालांतरीतिपुरःसरं कस्मैचिद्दत्तं विनष्टं चौरादिनाहृतं

अधाक्षं वसुपुष्यधातृजलभद्वीशार्यमांत्याभिधं मंदाक्षं रविविश्वमैत्रजलपाश्लेषाश्विचांद्रं भवेत् मध्याक्षं शिवपित्रजैकचरणत्वा ष्ट्रेंद्रविध्यंतकस्वक्षं स्वात्यदितिश्रवोदहनभाहिर्बुध्न्यरक्षोभगं २२ विनष्टार्थस्य लाभोंऽधे शीघ्रं मंदे प्रयत्नतः स्याद्दूरे श्रवणं मध्ये श्रु त्याप्तीन सुलोचने २३ तीक्ष्णमिश्रध्रुवोग्रैर्यद्द्रव्यं दत्तं निवेशितं प्रयुक्तं च विनष्टं च विष्ट्यांपाते च नाप्यते २४ मित्रार्कध्रुववासवांबुपम घातेयांत्यपुष्येंदुभिः पापैर्हीनबले तनौ सुरगुरौ ज्ञे वाब्जगौ खे विधौ ॥

स्वयमेव वा ब्रह्मचित्यकं द्रव्यं निश्चयेन कदापि नाप्यते तथा विष्ट्यां भ द्रायां पाते व्यतीपाते महापाते वा हृतं द्रव्यं नाप्यते चकाराद्ग्रहणेपि वसिष्ठः ध्रुवोग्रसाधारणदारुणाक्षैर्निक्षिप्तमर्थं त्वथवा प्रनष्टं चौरैर्हृतं दत्तमुपप्लवं वा विष्ट्यां च पाते न न लभ्यते तद्धि ति अत्रेदमनुसंधेयं तीक्ष्णमिश्रादिपंचदशभेषु मध्ये रोहिण्यार्यमविश्वजलभद्वीशेषु दत्तनिवेशितप्रयुक्तद्रव्यस्य वा प्राप्तिः चौरापहृतस्य स्वतो गतस्य वा धनस्य लाभ एव तेषां रोहिण्यादीनां मध्यमलोचनभेषु पाठसामर्थ्यादिति भावः २४ अथ जलाशयखन नन्त्यारंभयोर्मुहूर्तं शार्दूलविक्रीडितेनाह मित्रार्केति अनुराधाहस्तयो [illegible] पापग्रहैर्हीनबलैर्बलरहितैः सद्भिः तनौ लग्ने सुरगुरौ स

मु० टी० भकराणि ततएकमशुभं ततस्त्रीणि शुभानि ततएकमशुभं ततस्त्रीणि शुभानि ततश्चत्वार्यशुभानि एवंवीजोप्तौ सप्तविंशतिनक्षत्राणां शुभाशुभत्वमु
न० प्र० क्तं रत्नमालायां मूर्ध्नित्रीणि गलत्रयं च जठरेधिष्ण्यानि च द्वादशेत्यादि लग्नशुद्धिमाह वसिष्ठः भवरिपुसहजे पापैस्त्रिकोणकेंद्रस्थितैश्च शुभैः कथिते
२१ शुभधिष्ण्येपि च शुभलग्ने बीजवपनं कार्यं अथ हलचक्रमुच्यते हलेऽग्निहलचक्रे अर्कोक्षितात् भात् नक्षत्रात् क्रमेण त्रीणि असंति अशुभानि ततोऽष्टभा
नि संति शुभानि ततो नव भानि असंति ततोष्टौ भानि संति यथा सूर्य आर्द्रायां भुक्तेन्मृगः ततआरभ्य त्रीणि अशुभानि ततः पुष्यतोष्टभानि शुभानि ततो वि
शाखातो नव भान्यशुभानि ततः शततारकातोऽष्टभानि शुभानि एवमष्टाविंशतिभानि जातानि तथा वसिष्ठः अर्कगतागतसंस्थे भत्रितयं नेष्टमुभयतस्त्रि
ष्टं षोडशधिष्ण्यं नवकं शिष्टभानि षंच लांगलेचक्रे कश्यपोपि त्रिषष्ठ सुनवर्क्षेषु सप्तस्वर्कविमुक्तभात् हानिर्वृद्धिः कर्तृनाशो लक्ष्मीप्राप्तिर्यथाक्रमादिति
एवं बहुमुनिसंवादे सति इनभोक्षितर्क्षात् त्रिवन्हित्रीषुत्रीषुत्रिरामा ३।३।३।५।३।५।३।३। ण्यशुभदशुभानि क्रमाल्लांगलाख्यैरिति यद्युक्तं गणेशदैवज्ञै

रामेंद्वग्नियुगान्यसच्छुभकराण्युष्णोहलेर्कोक्षितात् ग्रामाघ्नवाष्टभानि मुनिभिः प्रोक्तान्यसत्संति च ॥ २५ ॥

मुहूर्ततत्त्वेतच्चिंत्यं श्रीपतिवाक्यमूलाभा
वात् ननु श्रीपतिवाक्यं अर्कक्रांतगतागतान्यनडुहां नाशाय भान्यग्रतो वृद्ध्यै भत्रितयं ततस्तु कृषिकृत् घाताय शूलात्रये धिष्ण्यानां नवकं ततदंतरगते स्यात् श्रियै
पंचके पश्चान्यत्रितयं तदत्र गदितं चक्रे शुभं लांगले इति मूलं चेत् न ह्ययं श्रीपतिवाक्यशब्दार्थः किंतु मूलवाक्याबोधेन स्वाज्ञानप्रकाशकः वाक्यार्थस्तु अ
र्कोक्रांतगतागतानि त्रीणि भानि वृषनाशकराणि स्युः ततस्त्रीणि वृद्ध्यै ततः पंचनक्षत्राण्यपास्य अग्निमाणि नव भानि शूलत्रये त्रिकंत्रिकं कृषिकृत् घाता
य स्थाप्यानि नन्वत्र पंचनक्षत्रत्यागे को हेतुरित्यत आह तदंतरगते पंचक इति तच्छब्देन हलोर्ध्वदंडः शूलोर्ध्वदंडः नुच्यते अर्कोक्रांतगतागतान्यनडुहां नाशाय
भान्यग्रतो वृद्ध्यै भत्रितयं अयमंतरस्य पूर्वावधिः मध्ये ततः पदोपादानात् तुशब्दस्तु आनंतर्यद्योतनार्थः तु अनंतरं शूलत्रये धिष्ण्यानां नवकं कृषिकृत् घाताये राम:
ति अंतरस्योत्तरावधिः तयोरंतरगते मध्ये विद्यमाना धिष्ण्यानां पंचकं च पंचकं च श्रियै स्यात् एवं नक्षत्रदशकमिति यावत् पश्चादन्यत् त्रितयं हलदंडोर्ध्वभागशुभं फल २१

हस्तनक्षत्रे अर्कैन्हि रविवारे इतियत्तत्रापिनग्राह्यमित्येकं संवंधः यतस्तस्मादेनोस्तदणंगृहीतुः कुलेषुभवेत् तत्पुत्रपौत्रादिभिरपिपरिहर्तुमशक्य
मित्यर्थः हस्तेऽर्कवारे संक्रांतौ यद्दणं स्यात्कुलेषुतत् वृद्धियोगे तथाज्ञेयमृणं छेदं तु कारयेदिति ज्योतिः प्रकाशोक्तेः बुधवारेऋणं कदापिनदेयं
२७ अथ हलप्रवाहमुहूर्तं शार्दूलविक्रीडितेनाह मूलद्वीशेति एतैः मूलादिभिर्एकोनविंशतिनक्षत्रैः विनार्कशनि रविशनिवारौवर्जयित्वान्य
वारेषु तत्रयापैर्हीनवलैर्निर्वलैः चंद्रेजलराशिनवांशकेसति पूर्णचंद्रेचमांसलेपुष्टेसति उदितेत्यर्थः गुरौलग्नेचसतितदाप्रथमं हलप्रवहणंशस्तं
स्यात् कश्यपः गुरौलग्नगतेशुक्रेवलिन्याप्योदयेविधौ शस्ताकृषिक्रियातत्र दुर्वलैःक्रूरखेचरैः अथसिंहेघटेकुंभेकर्केऽजेमेषे एणेमकरे घटेतु

नारेऽप्यालंभरूं तु संक्रमदिनेवृद्धोकरेऽर्केह्नि यत्तद्दंशेषु भवेदृणं नचवुधेदेयं कदाचिद्धनं २७ मूलद्वीशमघाचरध्रुवमृदुक्षिप्रैर्विनार्कंश
निंपापैर्हीनवलैर्विधौजललवेशुक्रेविधौमांसले लग्नेदेवगुरौहलप्रवहणंशस्तंनसिंहेघटेकर्कोजैणधटेत्ततोऽप्यकरंरिक्ता
सुपक्ष्यांतथा २८ एतेषु श्रुतिवारुणादितिविशाखोडूनिभौमंविनावीजोप्तिर्गदिताशुभात्वगुभतोद्याग्नीदुरुमैद्वः ॥०॥०॥

लायां तथारिक्तासुपक्ष्यां तथाशब्दोऽनुक्तसमुच्चयार्थस्तेनामावास्यामपिनशस्तः पश्चात्तन्त्रप्यकरं २८ अथवीजोप्तिमुहूर्तं फणिचक्रंचशार्दूलवि
क्रीडितेनाह एतेष्विति पूर्वोक्तनक्षत्रेषु श्रुतिवारुणादितिविशाखोडूनि विना श्रवणादिवर्जितेषु मूलमघाध्रुवमृदुक्षिप्रधनिष्ठास्वातीषुभौ
मंविनाभौमवारव्यतिरिक्तवारेषुवीजोप्तिः वीजवापनं शुभंज्ञेयं नारदः मृदुध्रुवक्षिप्रभेषुपित्र्यवायुवसूडुषु समूलभेषुवीजोप्तिरत्युत्तमफ
लप्रदा रवौरौद्रायपादस्थेभूमी संजायते रजः तस्माद्दिनत्रयंतत्रवीजवापंपरित्यजेदितिराजमार्तंडे आर्द्राप्रथमदिनत्रयनिषेधः अथवीजो
प्तौ फणिचक्रं अशुभतोनविघ्नंतेगावो ... मंति अस्मीचीनानितततत्रीणिशु

मु०टी०
न०प्र०
२२

माहेचंद्रबुधगुरुशुक्रवारेषु धान्यानां स्थितिः एकत्र स्थले स्थापनं सा शुभकरी निगदिता अथ ध्रुवेज्यादित्रयोदशनक्षत्रेषु धान्यवृद्धिः सत्यमेतावद्धान्यं देहि ततो मा
सद्वयानंतरं सपादं सार्धं वा दास्यामीत्येवंरूपा वृद्धिर्निगदिता २२ अथ शांतिकपौष्टिकादिकं वसंततिलकेनाह क्षिप्रेति क्षिप्रादिनक्षत्रेषु पौष्टिकमंगलाभ्यां
सह पौष्टिककर्मणा ग्रहशांत्या मंगलकर्मणा विना विनायकशांत्या सह शांतिकं दुःस्वप्नफलदं मूलादिनक्षत्रोत्पन्नं शांत्यादि शुभं स्यात् लग्नात् खे दशमे अर्के सति
विधौ चंद्रे सुखगते चतुर्थे गुरौ लग्नस्थे सति तत् शांतिकं मौढ्यादिदुष्टसमये गुरुशुक्रास्तादिदुष्टकाले नो शुभदं तथा निमित्तके उत्पातदर्शने सति गुरु
शुक्रास्तादावपि शुभं स्यात् उक्तं च शांतिकर्माणि कुर्वीत रोगे नैमित्तिके तथा गुरुभार्गवमौढ्येऽपि दोषस्तत्र न विद्यते २४ अथ होमाहुतिशुद्धिमनुष्टुभाह
सूर्यभाद्दिनि सूर्याक्रांतनक्षत्रात् त्रित्रिभेन क्रमेण त्रयमध्ये चंद्रे दिननक्षत्रे सति क्रमात् सूर्यादिमुखे होमाहुतिः पतति यथा सूर्याक्रांतनक्षत्रात् नक्ष

धान्यस्थितिः शुभकरी गदिता ध्रुवेज्यादीशेंद्रदस्रचरभेषु च धान्यवृद्धिः २२ क्षिप्रध्रुवांत्यचरमैत्रमघासु शस्तं स्याच्छांतिकं सह च मंगलपौ
ष्टिकाभ्यां खेऽर्के विधौ सुखगते तनुगे गुरौ नो मौढ्यादिदुष्टसमये शुभदं निमित्ते २४ सूर्यभात्त्रित्रिभे चंद्रे सूर्यविच्छुक्रपंगवः चंद्रारे
ज्यागुशिखिनो नेष्टा होमाहुतिः खले २५ सैकातिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवासः ॥

नत्रयमध्ये होमारंभे सूर्यमुखे होमा
हुतिपातः ततो नक्षत्रत्रये बुधस्य ततः शुक्रस्य ततः पंगोः शनेः ततश्चंद्रस्य तत आरस्य भौमस्य तत इज्यस्य गुरोः ततः राहोः ततः शिखिनः केतोः एवं सति
यद्दिने खले पापग्रहमुखे होमाहुतिः पतति स्यात् तदा न शुभदा अर्थाच्छुभग्रहमुखे शुभा सूर्यनक्षत्राच्चंद्रनक्षत्रपर्यंतगणना २५ अथ यद्दिने होमस्त्वेकी
र्षितस्तद्दिने वह्निनिवासवशेन शुभाशुभफलमिंद्रवज्रयाह सैकेति शुक्लादिगणनया वर्तमाना तिथिर्गण्या एकयुता वर्तमानवारयुता चतुर्भक्ताया
हृतं तच्छेषेन गुणामितं त्रिमितं शून्यमितं वा तदा भुवि भूमौ वह्निर्वासो वसतिः फलमाह सौख्याय होमे होमदिने भूमावग्नेर्वासे सति सौख्यं भवति अथ शे एमः २२
षाद्युग्मशेषे एकमिति शेषे ऽग्निवासो दिवि स्वर्गे फलं कर्तुः प्राणनाशः द्विमिते शेषेऽग्निवासो भूतले तत्फलं कर्तुरर्थनाशः उक्तं च तिथिवारयुतिः सैकाद्वे

अथ शिरामोचनविरेचनादिमुहूर्तं शार्दूलविक्रीडितेनाह त्वाष्ट्रादिनि त्वाष्ट्रद्वये चित्रास्वात्यौ मित्रभाद्वये अनुराधाज्येष्ठे कभात् द्वये रोहिणीमृगौ श्रोत्रं श्रवणः
चित्रादिषु एकादशसु नक्षत्रेषु भौमार्केगुरुवारे शिरामोक्षणं रुधिरवाहिनी नाडिका शिरा तस्याः सूक्ष्मशस्त्रघातेन नरः शिरातो रक्तमोक्षणं कुर्यात् अथ
बुधार्की विना बुधशनिवारौ त्यक्त्वान्यवारेषु पूर्वोक्तनक्षत्रेषु च विरेकवमनाद्यं औषधेन सुखप्रवृत्तिर्विरेकः वमनं वांत एतद्द्वयं कुर्यात् मित्रक्षिप्रचरध्रुवे
षु त्रयोदश नक्षत्रेषु रविवारे शुभग्रहवारे च विदो बुधस्य लग्नवर्गे जीवस्यापि लग्नवर्गे यस्मिन्कस्मिंश्चिल्लग्ने पि गुरुबुधयोः षड्वर्गे सति तनौ लग्ने गुरौ
च सति कर्तुर्गुरुबले च सति धर्मक्रिया कोटिहोमरुद्रानुष्ठानादिरूपा निगदिता कथिता ३० अथ धान्यछेदनं वसंततिलकेनाह तीक्ष्णाजपादेति एतेषु

त्वाष्ट्रान्मित्रकभाद्वयं वु पलघुश्रोत्रे शिरामोक्षणं भौमार्के ज्य दिने विरेकवमनाद्यं स्याद्बुधार्की विना मित्रक्षिप्रचरध्रुवे रविशुभाहे ल
ग्नवर्गे विदो जीवस्यापि तनौ गुरौ निगदिता धर्मक्रिया तद्बले ३० तीक्ष्णाजपादकरवन्हिवसुश्रुतीदुस्वातीमघोत्तरजलांतकतं
क्षपुष्ये मंदाररिक्तरहिते दिवसे तिशस्ता धान्यछिदा निगदिता स्थिरभे विलग्ने ३१ भाग्यार्यमश्रुतिमघेंद्रविधातृमूलमैत्रान्य
भेषु कथितं करणमर्दनं स्यात् द्वीशाजपान्निरृतिधातृशतार्यमर्क्षे सस्यस्य रोपणमिहार्किकुजौ विना सत् ३२ मिश्रोग्रयोर्द्रुमु
जगेंद्रविभिन्नकेषु ककौजतौलिरहिते च तनौ शुभाहे ॥ कोनविंशतिनक्षत्रेषु तथा भौमशनिरिक्तावर्जितदिने स्थिरलग्ने सति धान्यादीनां य
वादीनां छिदा छेदनं निगदिता कथिता ३१ अथ करणमर्दनं सस्यरोपणं च वसंततिलकेनाह भाग्येति विधिः रोहिणी अंत्यं रेवती एषु नवमेषु करणानां च
णकादीनां मर्दनं यछिद्यानादिना वितुषीकरणं तत्सम्यीचीनं स्यात् अथ विशाखादिषट्नक्षत्रैः आर्किकुजौ विना शनिभौमतोन्यवारेषु सस्यस्य धान्य
स्य रोपणं सत् शुभं ३२ अथ धान्यस्थितिं धान्यवृद्धिं च वसंततिलकेनाह मिश्रोग्रेति मिश्रोग्रादिविभिन्नेषु मिश्रादिदशनक्षत्रेभ्योन्येषु सप्तदशनक्षत्रेषु त
था ककर्कमेषतुलारहिते लग्ने मकरस्थिरद्विस्वभावलग्ने शुभ ॥

मु०टी० निषिद्धस्थानस्थो निषिद्धस्थानानि गोचरप्रकरणे तथा पापग्रहैर्भवेदष्टमाद्देशकेंद्रे १।४।७।१० कोणे नवपंचमे स्थाने स्थितैः सद्भिः एवंविधे लग्ने रुजाविरहितस्य
व०१० रोगनिर्मुक्तस्य जनस्य स्नानं आरोग्यस्नानं शस्तं शुभं नारदः स्थिरे ज्यादिनि सार्पांत्यपित्र्यवारुणभेषु च नकुर्याद्रोगमुक्तस्य स्नानं वारे ऽशुक्रयोरिति ४० अ
२२ थ शिल्पविद्यामनुष्टुभाह मृदुध्रुवेति मृदुध्रुवादि नक्षत्रे ज्ञे बुधे दशमे लग्ने वा सति अथवा गुरौ दशमे लग्ने वा सति तथा विधौ चंद्रे बुधगुरुषड्वर्गस्थे च सति
शिल्पविद्या नाम वर्णादि निर्मितमूर्त्यादिकं तद्विद्यायाः प्रारंभः शस्यते ४१ अथ संधानमनुष्टुभाह सुरेज्येति पुष्यादि नक्षत्रे तथा षष्ठ्यां तिथौ हरौ द्वादश्यां
च तिथौ नैतिलकरणे च तथा शुक्रदृष्टे युते च लग्ने तथा शुभग्रहाणां वारे संधानं संधिर्मैत्रीति यावत् इष्यते तथा च कश्यपः भाग्येषु षष्ठ्यसमे त्रे चलग्ने शुक्रेक्षि

स्नानं रुजाविरहितस्य जनस्य शस्तं हीने विधौ खलखगैर्भवकेंद्रकोणे ४० मृदुध्रुवक्षिप्रचरे ज्ञे गुरौ वा खलग्नगे विधौ ज्ञजीववर्गे उत्तेभ
23 स्थे शिल्पविद्या प्रशस्यते ४१ सुरेज्यमित्रभाग्येषु वा षष्ठ्यां नैतिले हरौ शुक्रदृष्टे तनौ सौम्यवारे संधानमिष्यते ४२ त्यक्ताष्ट८भू
त१४ शनिविधिकुजान्तनुभेमासौम्तनो ८ रविविधू अपिभानिमाश्राः॥

ते करणे नैतिले षष्ठ्यां द्वादश्यां संधिरिष्यते ४२ अथ परीक्षां मुह
र्तं वसंततिलकयाह त्यक्त्वेति भूतश्चतुर्दशी जनुर्भे मासौ जन्मर्क्षं जन्ममासश्च जन्मराशेरष्टमं तनौ लग्ने चकाराज्ज्याः भानि जन्मभकर्मभादि नक्षत्राणि वा
डीनक्षत्राणि एतानि त्यक्त्वा योगे हि स्वभावे च लग्ने चरलग्ने वा तल्वांशे च चंद्रशुद्धौ ताराशुद्धौ गुरुशुद्धौ च सत्यां करो हस्तः अदितिः पुनर्वसुः हरिः श्रव
णः इंद्रो ज्येष्ठा कं जलं तत्स्वामी वरुणः तस्य नक्षत्रं शततारका एषु भेषु परीक्षा कार्या अन्यत्स्वयं परीक्षा नाम सुवर्णतैलपादिपातकाभिशस्तस्य शुद्ध्यशुद्धि
विचारपूर्वकं तत्तन्माषादिरूपा दिव्यमिति यावत् उक्तं च दीपिकायां नो शुक्रास्ते ऽष्टमार्के गुरुरसहिततरे वौ जन्ममासे ऽष्टमेंदौ विष्टौ मासे मलाख्ये कुः रानिदि
वसे जन्मताराश्च वाथ नाडीनक्षत्रहीने सुरगुरुरजनीनाथताराविशुद्धौ सातः कार्या परीक्षा हि जनुचरगृहांशो दये शस्तलग्ने इति व्यवहारोच्चये अष्टम्यां राम:
२२

२भक्तावशेषकान् निवासेऽग्नेर्व्योम्नि रसे वित्तप्राणविनाशदः पाताले द्विकशेषेण धनसंचयनाशनः गुणवेदावशेषेण भूमौ विपुलसौख्यदः संस्कारेषु विचारो
स्यनकार्यो नापि वैस्मवे नित्ये नैमित्तिके कार्ये न चोक्तं मुनिभिः स्मृतः केचित्त्वेरसुपन्नपि होमे वर्ज्यमित्युक्तं तद्यथा अकेऽब्धिश्च दखमे शाच्चतुर्थे मदः शुक्रादा
श्मेगारकस्य राहुर्धर्मे जीवतः खेरसुप्ते होमे नाशः पुत्रदाराधनानामिति ३६ अथ प्रतिवर्षीयान्नवान्नभक्षणमुहूर्तमाह नवान्नमिति चरादिद्वार
शभेषु सत्सु नौ सभीचीनलग्ने शुभयुते युते दृष्टे ऽन्त्यर्थं नंदातिथयः १।६।११ विषघटी विवाहप्रकरणोक्ताः मधुश्चैत्रः पौषः आर्कि शनिः भूमिजो भौमः ए
तान्वितावर्जयित्वा नवान्नभक्षणं शुभं ३७ अथ नौकाघटनमुहूर्तमाह याम्यत्रयेति याम्यत्रयं भरणीकृत्तिकारोहिण्यः ईशआर्द्रा अन्यानि प्रसिद्धानि ए
सौख्यायहोमे शशियुग्मशेषे प्राणार्थनाशौ दिवि भूतले च ३६ नवान्नं स्याच्चरक्षिप्रमृद्भे सन्नौ शुभं विना नंदाविषघटीमधुपौ
षार्किभूमिजान् ३७ याम्यत्रयविशाखेंद्रसार्पपित्र्येशभिन्नभे भृग्वीज्यार्कदिने नौकाघटनं सन्नौ शुभं ३८ मूलार्द्राभरणीपि
त्र्यमृगे सौम्ये घटेन्नौ सुरेज्यकेंद्रे शुभे सिद्धिर्वीराभिचारयोः ३९ व्यत्याद्विनिध्रुवमघानिलसार्पधिष्ण्यैरिक्तेतिथौ चरतनौ वि
ष्योभिन्नन क्षत्रेषु शुक्रगुरुरविवारेषु सन्नौ शुभयुतदृष्टे लग्ने नौकाघटनं नौकानिर्माणं शुभं नौकाचालनं नौकागमनमुहूर्तं दीपिकायां शुभाहे विष्णु
र्मेंदुभगाभिमित्राश्विन्याणिषु चालनं घटनं स्यान्नान्नावः शुभतिथौ द्युषु अश्विकरेज्यसुधानिधिपूर्वीमित्रयनाच्युतभे शुभलग्ने तारकयोगतिथौ इविशुद्धौ
नौगमनं शुभदं शुभवारे ३९ अथ वीरसाधनाभिचारयोर्मुहूर्तमनुष्टुभाह मूलेति मूलादिनक्षत्रपंचकेन तथा घटेन्नौ कुंभलग्ने सौम्ये बुधे सति तथा शुक्रेसु
रेज्ये चतुर्थे अष्टमे शुद्धे ग्रहरहिते नाटके लग्ने वीरस्य साधनस्य अभिचारस्य कर्मणः सिद्धिः निष्पत्तिः ३९ अथ रोगनिर्मुक्तस्नानं वसंततिलकेनाह व्यंत्येति वि
गतान्त्यत्याद्दीनि रेवत्यादीनि नवधिष्ण्यानि येष्वपि तेषु पादाश्रिष्ट नक्षत्रेषु तथा रिक्तासु रिक्तातिथिषु चरलग्ने तथा शुक्रचंद्रवर्जितवारे तथा विधौ चंद्रे

मु०टी० मूलंग्निः कृत्तिकायाम्यमश्विनी पुनर्वदिवसा रोगः पित्र्यभे मघायां नवतिः विंशतिर्दिवसाः बुध्न्यभं उत्तराभाद्रपदा अर्यमा उत्तराफाल्गुनी पुष्यपुनर्वसु
नं०प्र० रोहिण्योश्च नगाः सप्त दिवसा रोगः अत्रैवैश्वभं मृगोत्तराषाढयोः मासः द्विंशद्दिनानि रोगस्थैर्यं ततो रोगनिवृत्तिः अत्र शांतिर्वसिष्ठोक्ता नक्षत्रस्य कनकेन
२४ कार्या तल्लिंगमंत्रैर्गंधपुष्पैः वस्त्राक्षतैर्गुग्गुलधूपदीपनैवेद्यैर्ताम्बूलफलैश्च सम्यक् पूजां च कृत्वा ऽमयनाशनाय द्विजाय दद्यात् तुलं शिवाय स्वाम
योगः अतुलमपरिमितं द्रव्यं अथानंतरं यमाहिमूलभे भरण्यश्लेषामूलेषु कृत्तिका विशाखार्द्रा मघासु च सप्तनक्षत्रेषु यस्य कस्यचित् स्पर्शदंशने सर्प
दंशने मृतिर्भवेत् अन्नसर्पदंशयस्य एतेषु गोचरवशेन चंद्रबलं न भवति तस्यैव सर्पदंशेन चंद्रबलं न भवति तस्यैव सर्पदंशेन यत्र चंद्रस्तस्यैव गोचरे वा शुभ
प्रदः तदा न तं मंत्रे वन्मृत्युः सुधा संसिक्तदेहिनं इति ४६ अथ शीघ्रं रोगी मरणे विशिष्टयोगं द्विजीयोपजातिकयाह रौद्राहीति रौद्रादिनक्षत्रेषु पापवारे
२४ मूलाग्निदास्रेन वपित्र्यभेन खा २० बुध्न्यार्यमेज्यादितिधातृभे नगाः ७॥ मासो ३० ज वैश्वेषु यमाहिमूलभे मिश्रेशपित्र्येष फणिदंशने
मृतिः ४६ रौद्राहिशाक्रांबुपयाम्यपूर्वाद्विदैववस्वग्निषु पापवारे रिक्ताहरिष्कंदद्दिने च रोगे शीघ्रं भवेद्रोगिजनस्य मृत्युः ४७ स्थि
राहिमूलेंद्रहरीशवायुभेष्वेत क्रिया स्यान्नत्रपंचकुंभगे विधौ॥
रिक्तातिथिः प्रसिद्धाः हरिर्द्वादशी स्कंदः षष्ठी एतासु तिथिषु एवंविधे विशिष्टयो
गे यस्य रोगोत्पत्तिर्भवति तस्य रोगिजनस्य शीघ्रं मृत्युर्भवेत् ४० अथ प्रेतदाहमुहूर्तं प्रेतदाहादिनिषेधं चोपेंद्रवज्रयाह स्थिरेति स्थिरादिनक्षत्रेषु प्रेतक्रिया
प्रेतानां मृतानां प्रियजनमलोकप्राप्त्यर्थं श्राद्धादिक्रिया स्यात् यदि दाहसमयेकार्यावशात् लब्धा अथ त्रपंचकुंभगे विधौ मीनकुंभस्थिते चंद्रे धनिष्ठो
त्तरार्धादिपंचनक्षत्रे प्रेतस्य दाहो ज्वालनं त्यजेत् च पुनः यमदिग्गमं दक्षिणदिशि गमनं यात्रां तथा शय्याया खट्वायाः वितानं वयनं तथा गृहगोपनं एम:
गृहाच्छादनं आदिशब्देन तृणकाष्ठसंग्रहं च त्यजेत् अत्र पुराणे पंचके मरणमपि निषिद्धं कुंभमीनस्थिते चंद्रे मरणं यस्य जायते न तस्योर्ध्वगतिर्हि शासंत २४

चचतुर्दश्यां शायश्चित्तपरीक्षणे नपरीक्षाधिवासत्र्यंशानि सौमदिने भवेत् ज्येष्ठाश्रवणहस्तश्चतथाशेपः पुनर्वसुः तद्वच्छतभिषा प्रोक्ता स्वभियुक्त विचारणे इति
नाडीनक्षत्राणि दीपिकाकारवचनात् जन्मर्क्षमाद्यं दशमं चकर्मसंघातिकं षोडशभं च मानसं स्यात्मंच विंशं समुदायमष्टादशं त्रयोविंशतिभं विनाशकं एवं षट्
भोजनः सर्वो जातिदेशाभिषेकभैः नवभोन्नपतिर्ज्ञेयो नाडीताराः स्वतास्स्मृः इतिनजातिनक्षत्राणि वराहसंहितायां पूर्वात्रयं सानलमग्रजानां राज्ञां च पुष्येण
सहोत्तराणि सपौष्णमैत्रं पितृदैवतं च प्रजापतेर्भं च कृषीवलानां आदित्यहस्ताभिजिदश्विनानि वणिक्जनस्याम्यमुपागतानि मूलत्रिनेत्रानिलवारुणानि
भान्युग्रजातेः प्रभविष्णुतायाः सौम्यैंद्रचित्रावसुदेवतानि सेवाजनस्याम्यमुपागतानि सार्पं विशाखाश्रवणो भरण्यश्चांडालजातेरभिनिर्दिशंतीति देशो
वाराणस्यादिकस्तन्नक्षत्रं शतपदचक्रोक्तं यथा वाराणस्याः नक्षत्रं रोहिणीति अभिषेकभं यस्मिन्पुष्यादिके नक्षत्रे राज्ञाभिषेको जातस्तदभिषेक

द्यंगे चरेततुलवेशशिजीवताराशुद्धौ कराद्दितिहरीन्दुकपेपरीक्षा ४३ व्ययाष्टशुद्धोपचये लग्नगे शुभदृग्युते चंद्रे त्रिषड्दशायस्थे सर्वा
रंभः प्रसिध्यति ४४ स्वातींद्रपूर्वाशिवसार्पभे मृतिर्ज्वरेंत्यमैत्रे स्थिरताभवेद्रुजः याम्यश्रवोवारुणतक्षभे शिवा घस्राहियस्रो ४५ व
धिपार्कवासव ४५ र्क्षेमितिराश्यांनवभानि इतरेषां षडेव भानि ४२ अथ सामान्यतः शुभकार्येषु लग्नशुद्धिमनुष्टुभाह व्ययेति गयोद्वादशं अष्टमं
एतत्स्थानद्वयं शुद्धं ग्रहरहितं यस्मिन् एतादृशेस्वजन्मराशेर्जन्मलग्नाद्वा उपचयभवने त्रिषडेकादशदशमराशौ लग्नगते शुभैर्दृष्टे युते च तथा चंद्रे त्रिषट्द
शायस्थे सति सर्वेषां शुभकार्याणामारंभः सिध्यति तथा च वसिष्ठः उपचयभे लग्नगते व्ययभे धनशुद्धिसंयुते लग्ने उपचयगे शीतकरे मंगलकर्माणि कार्या
णि इति ४४ अथ नक्षत्रेषु ज्वरोत्पत्तौ सत्यां तन्निवृत्तौ दिनसंख्यां द्विनीयोपजातिकयोपेंद्रवज्रयाचाह स्वातींद्रेति मूलाग्नीति स्वातीज्येष्ठापूर्वात्रयाद्रा
श्लेषासु ज्वरे ज्वरोत्पत्तौ सत्यां मृतिर्मरणं स्यात् अर्थांत्यमैत्रे रेवत्यनुराधयोर्ज्वरोत्पत्तौ रुजो रोगस्य स्थिरता बहुकालेन रोगनिवृत्तिः स्यात् तथा भर
णीश्रवणशततारा नक्षत्रभं चित्राऽऽर्द्रेषु नक्षत्रेषु शिवाघस्राः एकादशदिवसाः रोगः स्यात् विशाखा अर्कोहस्तः वासवं धनिष्ठा एषु त्रिषु भेषु ये

पंद्यान्नदोषस्त्वस्माद्गतइति ॥ अत्रत्रिपुष्करेकश्यपेनरविस्थानेबृहस्पतिर्वारोप्युक्तः भद्रातिथिः शनीज्याराबारैर्वा द्विपमांघ्रिभं त्रिपुष्करस्त्रिगुणदं
द्विगुणंद्व्यंघ्रिभंमृतावितिइदमेवदृष्ट्वाश्रीपतिनाप्युक्तं विषमचरणांघ्रिभ्यामित्यादि अत्रकश्यपवाक्यंमृतावेवत्रिगुणफलतोक्तायंथकृतानु
श्रीपतिवाक्यानुरोधान्मृत्युविनाशकृद्वावित्युक्तं ५० अथसवप्रतिकृतिदाहेनिषिद्धकालंशार्दूलविक्रीडितेनाह शुक्रारेति एवंविधेदिनेशव
स्यप्रतिकृतिःपर्णशरादिनासावयवत्वकल्पनंतस्यदाहोनकार्यः कुतः द्विविधोहिप्रेतसंस्कारः अन्यस्यशरीरस्यैकः तत्रप्रतिकृतेरन्यः तत्रअन्य
स्यशरीरसंस्कारेदिनविचाराभावः गार्ग्यः प्रत्यक्षशरीरसंस्कारेदिनंनैवविशोधयेत्इति प्रतिकृतिसंस्कारेकालत्रयं आशौचमध्येवर्षमध्येव
र्षानंतरंचेति आशौचमध्येक्रियतेपुनःसंस्कारकर्मचेत् शोधनीयंदिनंतत्रयथासंभवमेवतु आशौचविनिवृत्तौचेत्पुनःसंस्क्रियतेमृतःसंशोध्य



त्रैपुष्करोभवतिमृत्युविनाशकृद्वौत्रैगुण्यदोद्विगुणकृद्वसुतक्षचांद्रे ५० शुक्रारार्किषुदर्शभूतमदनेनंदासुनीक्ष्णोग्रभेपौष्णेवारु
णभेत्रिपुष्करदिनेन्यूनाधिमासेयने याम्येःव्द्वात्ययतेश्चपातपरिघेदेवेज्यशुक्रास्तकेभद्रावैधृतयोःशवप्रतिकृतेर्दाहोनपक्षे

वदिनंयावत् ऊर्ध्वंसंवत्सराद्यदीति गार्ग्यवचनाद्दिनशुद्धिरुच्यते शुक्रारार्किदिनेशुक्रभौमशनिवारेशवप्रतिकृतेर्दाहोनकार्यइतिप्रत्येकंसंबंधः द
र्शोमावास्याभूतश्चतुर्दशी मदनस्त्रयोदशी नंदाःप्रतिपत्षष्ठ्येकादश्यः आसुतिथिषुतथातीक्ष्णोग्रभेमूलार्द्राज्येष्ठाश्लेषास्तीक्ष्णानिपूर्वात्रयम
घाभरणीउग्राणि पौष्णंरेवती वारुणंशततारा पूर्वोक्तेत्रिपुष्करदिने न्यूनाधिमासेक्षयमासेअधिकमासे अयनेयाम्येअब्दात्ययतः अब्दमध्येया
म्यायनेपिकार्यः नंदामदनभूतामापातवैधृतिविष्टिषु शुक्रार्किभौमपरिघध्रुवमिश्रोग्रमैत्रभैः कर्तुश्चंद्रेदेववेदांत्येजन्ममृत्युरितारके त्रिपाद्भेसिते
पक्षेयनेयाम्येव्दतः परं शवप्रतिकृतेर्दाहः शुक्रेज्यास्ताधिमासके नेष्टोमध्योद्धिपात्भैत्रधीशादितिभगध्रुवेइतिनिबंधोक्तेः दिनक्षयोपिवर्ज्यःवर्जये
तुदिनक्षयमिति गार्ग्योक्तेः पातपरिघेपातोव्यतीपातोमहापातश्चपरिघश्चएतेषुदाहोनकार्यः देवेज्यशुक्रास्तके दाहोनकार्यः भद्रायांवैधृतौचतथा 

नेनेशुभं भवेदिति तेन पंचके दाहप्राप्तौ सत्यां तत्पुत्तलविधिं कृत्वा दाहः कार्यः पश्चादाशौचनिवृत्त्यनंतरं शांतिकं कार्यं यदि पंचकप्रवृत्तेः प्रागेव मृतः प्रतिबंधव
शात्पंचके दाहप्राप्तौ पुत्तलविधिमकृत्वा दाहः कार्यः आशौचनिवृत्त्यनंतरं शांतिर्न कार्या एवं रेवत्यंतमृतस्य रेवतीमपहाय दाहः कार्यः न पुत्तलविधिः
आशौचनिवृत्त्यनंतरं शांतिरेव कार्या मरणानुषेधदाहनिषेधप्रतिपादकवचनद्वयमप्यावाधितं ४८ अथ काष्ठानां गोमयपिंडानां च संग्रहमुहूर्तेनेशा
दूलविक्रीडितेनाह सूर्येशेन्द्वग्निभैरिति स्पष्टार्थं ४९ अथ त्रिपुष्करयोगस्य फलं वसंततिलकयाह भद्रातिथिरिति भद्रासंज्ञकतिथिर्द्वितीया सप्तमी द्वाद
शी शनिभौमसूर्यवारो भवति तथा द्वीशं विशाखा अर्यमोत्तराफाल्गुनी अजचरणः पूर्वाभाद्रपदा अदितिः पुनर्वसुः वन्हिः कृत्तिका वैश्वमुत्तराषा
ढा एषु नक्षत्रेषु उक्ततिथिवारनक्षत्ररूपे विशिष्टयोगे सति त्रिपुष्करः त्रिपुष्कर एव त्रैपुष्करः स्वार्थे अण् त्रिपुष्करसंज्ञकयोगो भवति कीदृशः मृत्युविनाशव

प्रेतस्य दाहं यमदिग्गमं त्यजेच्छय्यावितानं गृहगोपनादि च ॥ सूर्येशेन्द्वग्निभैर्ध्रुवस्थलगतैः पाकोरसैः संयुतैः शीर्षयुग्ममितैः शा
व स्यादहनं मध्ये पुगैः सार्पभीः प्रागाशादिषु वेदभैः स्वसुहृद्दास्यात्संगमो रोगभीः काष्ठादेः करणं सुखं च गदितं काष्ठादिसंस्था
पने ४९ भद्रातिथी रविजभूतनयार्कवारे द्वीशार्यमाजचरणादितिवन्हिविश्वे ॥
त्रैगुण्यदस्तद्दिने यदि कश्चिन्म्रियेत तदाऽपा
त्रयो म्रियेरन् यदि किंचिद्वस्तु विनष्टं तदा तस्य तद्वस्तुत्रयनाशः तथा किंचिद्वस्तु लब्धं तदा त्रिगुणस्तद्वस्तुलाभः वसिष्ठः रविरविजभौमवारे
भद्रायां विषमपादभक्षं चेत् त्रैपुष्करायं योगस्त्रिगुणफलो द्विगुणो भवेद्द्विगुणं पादास्तिष्यनक्षत्रस्यैव चरणाः पूर्वराशौ चरणत्रयमपरराशौ भवति
तानि विषमचरणानि द्वीशार्यमेत्यादीनि अथ वसुधनिष्ठात्तक्षचित्रा चांद्रमृगः एतानि भानि भद्रातिथयः रविशनिभौमवाराश्च अत्रापि विशि
ष्टयोगे द्विपुष्करनामयोगो भवति तत्फलं मृत्युविनाशवृद्धौ द्वैगुण्यप्रदः [illegible] भवति [illegible] स्थानहानिनाशाय गोत्रयं मूल्यमेव वा द्विपुष्करे

मु० टी० अथात्रैवाचार्योपजातिकयाह अथो चुरन्त्य इति आचार्याः प्रोचुः मूलस्य प्रथमा अष्टघटिकाः प्राक्तस्य ज्येष्ठायाः अंतिमाः पंचनाडिका एवमुभयोरंतराले
न० प्र० त्रयोदश घटिका अभुक्तसंज्ञकाः प्रोचुः उक्तं च ज्येष्ठांत्यघटिकाः पंचमूलाद्या वसुनाडिकाः अभुक्तमितितज्ज्ञेयं तत्र जातं शिशुं त्यजेदिति तत्फलमाह तत्रा
२६ भुक्तमूले जातं शिशुं बालं वा बालां वा पिता परित्यजेत् त्यागाशक्तो वा पिता अस्य बालस्याष्टसमाः अष्टौ वर्षाणि मुखं न पश्येत् नारदः अभुक्तमूलजं पुत्रं
पुत्रीमपि परित्यजेत् अथवाब्दाष्टकं तातस्तन्मुखं न विलोकयेदिति अत्र घटीनां न्यूनाधिक्यकथनं दोषस्याधिक्याल्पत्वकथनार्थं ज्ञेयं ५४ अथ
मूलाश्लेषाजातस्य चरणवशेन फलमुपजातिकयाह आद्ये पितेति मूलप्रथमचरणे जातस्य बालस्य पिता नाशं प्राप्नोति द्वितीयचरणे जननी माता ना
शं प्राप्नोति सापत्नमातरिमान् शब्दो गौणाः तेन गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति जननीपदप्रयोगः तृतीयचरणे धनं नश्यति चतुर्थचरणे वा

अथो चुरन्त्ये प्रथमाष्टघट्यो मूलस्य शाक्रान्तिमपंचनाड्यः जातं शिशुं तत्र परित्यजेद्वा मुखं पिता स्याष्टसमा न पश्येत् ५४ आद्ये पिता ना
शमुपैति मूलपादे द्वितीये जननी तृतीये ॥ लस्य तु शुभः अत्र विशेषो नारदेनोक्तः दिवा जातस्तु पितरं रात्रौ तु जननीं तथा आत्मानं संध्ययोर्हं
ति नास्ति गंडो निरामयः वसिष्ठस्तु मूलाद्यपादे यदि रात्रिभागे तदात्मनो नास्ति पितुर्विनाशं द्वितीयपादे दिनगो यदि स्यान्न मातुरल्पो पितृदास्ति दोषः
अथानंतरं षण्मासं त्यामूलाश्लेषाशांत्यां खलु तु ष्ठितया सर्वे त्र चरणचतुष्टये पि शुभं अनिष्टफलनाशकं कल्याणं स्यात् शास्त्रोक्तरीत्या स्वल्पसूतकान्ते मासे
तृतीये पथ्यवत्सरांते इति कालत्रयं वसिष्ठेनोक्तं गंडे तु विशेषः मातृगंडे सुतं जातं सूतकांते विचक्षणः कुर्याच्छांतिं तदृक्षे वा तद्दोषस्यापनुत्तये शिष्टास्तु
सर्वत्रापि यन्नक्षत्रे जन्म तन्नक्षत्र एव शांतिरिति व्यवहरंति अथाहिमे विलोममिति आश्लेषायां मूलपादोक्तं फलं विलोमं विपरीतं ज्ञेयं मूलस्य प्रथम रामः
पादे पितृनाशः उक्तः सोऽश्लेषा चतुर्थपादोत्पन्नस्य द्वितीयपादे मातृनाशः सोऽश्लेषा तृतीयचरणे तृतीयचरणे धननाश उक्तः सोऽश्लेषा द्वितीयचरणे च २६

अथतेनैव कंद्रसावज्जैनतएण्याह जन्मप्रत्यरितारयोरिति कर्तुः जन्मप्रत्यरितारयोः जन्मताराउत्पत्तिनक्षत्रं दशमैकोनविंशंचेति प्रत्यरिताराजन्मभात्पंच मचतुर्दशत्रयोविंशंनक्षत्रं तथाकर्तुर्मृतिसुखांत्येज्ञेअष्टमचतुर्थद्वादशस्थेचंद्रेसतिदाहोनसत्तमशस्तः अथमध्यमनक्षत्राणिमैत्रमनुराधा भगः पूर्वाफाल्गुनी अदितिः पुनर्वसुः ध्रुवाणिरोहिण्युत्तरात्रयं विशाखा चांघ्रिभंमृगचित्राधनिष्ठाः रेवत्येपि शवदाहेमध्यमः अथोत्तमानि अर्केज्याभ्यां सहितोविधुः अर्कगुरुचंद्रवारैस्तथाश्रवणाहस्तस्वाती अश्विनीपुष्येषुपंचनक्षत्रेषुशवप्रतिकृतेर्दाहः श्रेष्ठः ॥ इत्यखिलमाशौचादर्पणतः अनंतरंमध्येतुयथासंभवंकिंचिद्गुणागीकारेणविचार्यं ५२ अथमूलनक्षत्रजातस्यविशेषमुपजातिकयाह अभुक्तमितिनारदः अभुक्तमूललक्षणंज्येष्ठांत्यमूलादिभवंघटीचतुष्टयंजगौ ज्येष्ठांत्यघटीचतुष्टयंमूलादिघटीचतुष्टयंचेत्यर्थः नारदः योज्येष्ठामूलयोरंतरालप्रहरजः शिशुः अभु

जन्मप्रत्यरितारयोर्मृतिसुखांत्येजेचकर्तुर्नेसन्मध्योमैत्रभगादितिध्रुवविशाखाचांघ्रिभेज्ञेपिच श्रेष्ठोर्केज्यविधोर्दिनेश्रुतिकरस्वात्य श्विपुष्येतथात्वाशौचात्परतोविचार्यमखिलंमध्येयथासंभवं ५२ अभुक्तमूलंहिघटीचतुष्टयंज्येष्ठांत्यमूलादिभवंहिनारदः वसिष्ठएकद्विघटीमितंजगौबृहस्पतिस्त्वेकघटीप्रमाणकं ५३

क्तमूलजंः सार्पमघानक्षत्रयोरपि अयमेवमुख्यः पक्षः कश्यपादिबहुमुनिसंवादात्तु कश्यपः ज्येष्ठांत्यमूलयोरंतरालयामोद्भवः शिशुः अभुक्तमूलजः सोथत्वाश्लेषापित्र्ययोरपि वसिष्ठोपि भुजंगपौरंदरपौष्णभानांतद्वयभानां चतदंतरालं अभुक्तमूलंप्रहरप्रमाणंत्यजेत्सुतंतत्रभवांसुतांचेति वसिष्ठएकद्विघटीमितंजगौ ज्येष्ठांतेएकघटिकामूलाद्यंघटिकाद्वयमित्यर्थः । इदंवसिष्ठनकेचिन्मतमुक्तं पतत्सहाकोकेचित् अपरेत्तिपदोक्तेः तद्वाकांच ज्येष्ठांत्यपादघटिकामितमेवकेचिन्मूलंह्यभुक्तमपरेतुनरामनंति मूलाद्यपादघटिकाद्वितयेनसार्धमष्टौसमाः परिहरेदिहजन्मभाजमिति बृहस्पतिस्त्वेकघटीप्रमाणकंजगौ ज्येष्ठांत्यार्धघटिकामूलाद्यार्धघटिकेत्यर्थः गुरुः ज्येष्ठांत्यघटिकार्धंच मूलादौ घटिकार्धके तयोरंतरगं नाडीद्वयं भुक्तमुच्यतइति ५४

मौ तिष्ठति तपस्यः फाल्गुनः शुक्रो ज्येष्ठः फाल्गुन मार्गशीर्षे वैशाखज्येष्ठेषु अधः पाताले मूलं तिष्ठति तत्फलं च यदा मूलनक्षत्रं यस्मिन्मासे यत्र भवति तत्रैव
स्वर्गमृत्युपातालेषु एवमोक्तं शुभाशुभफलं ददाति तेन इष्ट्याद्यभावे स्वर्गपातालस्थे मूले दोषाभावाच्छांतेरनावश्यकत्वं ज्ञेयं यदा तु भूमावेव मूलं त
दा शांतिरवश्यं विधेयेति शब्देन उक्तं च ज्योतिषार्णवे भूमिष्ठं दोषवहुलं स्वल्पमन्यत्र संस्थितमिति ज्योतिर्निबंधे मूलाश्विपित्र्यचरणाः प्रथमे चन्द्र
नपौष्णेंद्रयोश्चफणिनक्षत्रतुरीयपादे मातुः पितुः स्ववपुषोपि करोति नाशं जातो यदा निशि दिने प्यथ संध्ययोर्वेति तत्रापि शांत्या शुभं भवतीति ज्ञे
यं ५६ अथ मूलसदृशगंडांतादिनिमित्तेषु जातस्यारिष्टपरिहारं च शार्दूलविक्रीडितेनाह गंडांतेंद्रभेति एतेषु शिशोरुत्पत्तिर्नेष्टास्तादुष्ट
फलदा गंडांतं तिथिनक्षत्रलग्नानां संधिः तल्लक्षणं ज्येष्ठापौष्णभेत्यादिना वक्ष्यति इंद्रभं ज्येष्ठा नक्षत्रं शूलयोगः पातो महापातः परिघव्याघा

मूलं त्वथ सार्पतनयस्य मार्गवैशाखशुक्रेष्वशुभं च तत्र ५६ गंडांतेंद्रभशूलपातपरिघव्याघातगंडावमे संक्रांतिव्यतिपातवैधृतिसि
नीवालीकुहूदर्शके वज्रेकृष्णचतुर्दशीषु यमघंटे दग्धयोगमृतौ विष्टौ सोदरभे जनिर्नेपितृभे शस्ता शुभा शांतितः ५७ ॥

तगंडयोगाः अवमस्तिथिक्षयः संक्रांतिः सूर्यसंक्रमणपुण्यकालः व्यतीपातवैधृती योगौ सिनीवाली दृष्टेंदुरमावास्या कुहूर्नष्टेंदुरमावास्या सा दृष्टें
दुः सिनीवाली सा नष्टेंदुकला कुहूरित्यभिधानात् दर्शश्चंद्रदर्शनरहितामावास्या एतत्त्रयं दोषोत्पत्तिपादद्वयेष्वतेषु वज्रे वज्रयोगे कृष्णपक्षचतुर्दश्यां
यमघंटे मघाविशाखेत्युक्ते दग्धयोगे सूर्येशपंचाग्निरसाष्टनंदा इत्युक्ते मृतौ द्वीशानो याद्वित्युक्ते मृत्युयोगे विष्टौ भद्रायां सोदरस्य भ्रातुर्भगिन्या वा
नक्षत्रे पितृभे माता वा पिता च पितरौ तयोर्भे मातृभे पितृभे च एतेषु निमित्तेषु सुतस्य सुताया वा जन्म चेत्स्यात्तदा निष्टकृत्स्यादित्यर्थः दुष्टनिमित्तस्याप 
लक्षणत्वात् त्रीतरजन्माप्यनिष्टं सजातीयापत्यप्रसवानंतरं विजातीयापत्यप्रसवस्त्रीतरः यथा पुत्रत्रयप्रसवानंतरं कन्याजन्म कन्यात्रयप्रसवा 
नंतरं पुंजन्म सा जनिः शांतितः वसिष्ठादिप्रोक्तशांत्या सम्यक्कृतया शुभा परिणामसुखदा प्रतिनीयते ५७

चतुर्थे चरणे तु मस्तुकं तदाश्लेषा प्रथमचरणो ज्ञेयं अत्र बहुविचारो लिखितं यन्मूलस्य भयान्न लिख्यते अथ केचिन्मूलवृक्षादिविचारमुक्तः जपार्णवे मूलं स्तंभस्त्वचा शाखा पत्रं पुष्पं फलं शिखा मुनयोष्टौ दिशो रुद्राः स्तयाः पंचाब्धयो नगाः मूले तु मूलनाशः स्यात्स्तंभे वंशविनाशनं त्वचि मातुर्भवेत्कष्टं शाखायां मातुलस्य च पत्रे राज्यं विजानीयात् पुष्पे मंत्रिपदं स्मृतं फले च विपुला लक्ष्मीः शिखायामल्पजीवितं अथ मूलपुरुषयोगे घटीन्यासस्तत्रैव मूलस्य घटिकान्यासो मूर्ध्नि पंच नृपो भवेत् मुखे सप्त मृतिः पित्रोः स्कंधे वेदा महाबलः बाह्वोरष्टौ बली पाण्योस्तिस्रो हत्यान्वितो भवेत् हृदि वेदा नृपमंत्री नाभौ द्वौ मखविद्भवेत्। गुह्ये दश शांतिकामी स्याज्जान्वोः षण्महामतिः पादयोः षट्मृतिस्तस्येत्युक्तवान्कमलासनः इति अथ मूलोत्पन्नकन्यायाः फलार्थं मूलांगविभागस्तत्रैव चत्वारो नाडिकाः शीर्षे कुर्वंति पशुनाशनं मुखे षट् धनहानिः स्यात्कंठे पंच धनागमः कौटिल्यं हृदये पंच वाक्ये वित्तागमं ततः वेदाः पाण्योर्द्वयोः षण्मे वेदा गुह्ये ति कामिनी ज्येष्ठमातुलनाशश्च जंघयोर्युगनाडिका ज्येष्ठभ्रातृविनाशश्च ततो जानुयुगमके पादयोर्दश नाड्यश्च तत्र वैधव्यमादिशेत् इति मूलप्रघट्टा

धनेचतुर्थीस्वसुभौथशांत्यासर्वत्रसत्स्यादहिभेविलोमं ॥ स्वर्गेशुचिप्रोष्ठपदेषुमाघेभूमौनभःकार्तिकचैत्रपौषे॥

यामुनिभिःफलमीरितं

अथाश्लेषाजातयोः पुत्रकन्ययोरंगविभागेन फलं तत्रैव मूर्ध्नि पंच सुराज्याप्तिर्मुखे सप्त पितृक्षयः नेत्रे द्वे जननीनाशः ग्रीवायां त्रिषु लंपटः स्कंधे वेदा गुरौ भक्तिः हस्तेष्टौ च बली भवेत् हृद्येकादश मिश्रात्मघाती संजायते नरः स्त्री वा नाभौ भ्रमः षड्भिर्गुह्ये नव तपोधनः पादे पंच धनं हंति सा पोदत्तं फलं क्रमात् अथाश्लेषावृक्षोपि तत्रैवोक्तः फलं पुष्पं दलं शाखा त्वग्लताकं द्वयं च सार्पकल्पांदशाक्षांकस्वरविश्वार्कसागराः नाडिकास्तत्र वै वाले फलं ज्ञेयं यथाक्रमं श्रीः श्रीराजभयं हानिः मातृपित्रात्मसंक्षयः इति अयं विभागो नक्षत्रस्य षष्टिघटिकात्मको ज्ञेयः न्यूनाधिके त्वनुपातः ५५ अथ मूलनिवासफलमिंद्रवज्रयाह स्वर्गे इति शुचिराषाढः प्रोष्ठपदो भाद्रपदः [illegible] मूलनक्षत्रं स्वर्गे तिष्ठा श्रावणकार्तिकचैत्रपौषे

मु०टी० शाठ्यविवर्जितः अत्र विशेषः शौनकेन पलमानेन वार्द्धेन पादेनाथ त्वशक्तितः न स्वर्णरेखनाशसंकारयित्वा विचक्षणाः यद्वा मूल्यं तु वली स्वस्थापयित्वा प्रसन्न
न०प्र० येन सुवर्णास्मं दैवत्यं सर्वदेवात्मको नलः । सर्वदेवात्मको विप्रः सर्वदेवमयो हरिरिति वृत्वा शिषो ऽथवा द्वौ वस्तु कृ लक्ष्मा स्यत्तद्विना ब्राह्मणान्वरयेत्यश्री
२९ स्वस्तिवाचनपूर्वकं श्रोत्रियाश्चतुरो वाष्टौ द्वादशाथवा षोडश मन्त्रानाचार्यमेनेषांश्रेष्ठं न त्वतिमार्द्देने। ईशानादिचतुःकोणेषु व्रणान्जलपूरितान् पूर्वोक्त
द्रव्यसंयुक्तान्स्थापयेद्वात्रवर्णिकान् विप्रान्पृथक्पृथक् वापि मधुपर्कादिनार्चयेत् द्वारेषु जापकानष्टौ द्वौ द्वौ च वरयेत्पुनः अब्लिंगैर्वारुणैर्मंत्रैः सुकृपु
ण्याख्यानादिभिः तत्कुंभे जलं स्पृष्ट्वा कुशकूर्चैर्जपेदिति रुद्रसूक्तं च भद्राग्नेरानो भद्रा इति क्रमात् पुरुषसूक्तं च तन्मन्त्रैर्देवान्ध्यात्वा प्रयत्नतः गोमूत्रं गोम
28 यं क्षीरं दधिसर्पिः कुशोदकं पंचगव्यमिदं कुंभे क्षिपेद्गजमदान्वितं रजतं कांचनं ताम्रं विद्रुमं तीर्थवारि च निक्षिपेद्धेममूलं च दशावयवनिर्मितं देवदा
रुच शैलेयपद्मं नालिनात्पलं तथा वचां लोध्रं प्रियंगुं च शतच्छिद्रे घटे क्षिपेत् वंशपात्रोपरिन्यस्तं शतच्छिद्रघटे स्थितं ततस्त्वनिर्मितं देवमर्चयेत्पश्चिमामुखे
मोषुणा स्विति मंत्रेण शुक्लवस्त्राच्छादनादिभिः मूलरूपं विधातव्यं शामं कुणपवाहनं खड्गखेटधरं चोग्रं द्विभुजं वक्रकाननं स्थापयेत्तं ग्रहांश्चैव वस्त्रगंधादि
भिर्यजेत् चरुं च श्रपयेत्तत्र नैऋतं दक्षिणापदं तत्र चत्वारः कुंभाश्चतुर्दिक्षु स्थाप्याः एकः कुंभो रुद्रस्थापनार्थमन्यः स्थाप्यः एकः शतच्छिद्रः कुंभः तस्मिन्कुंभे
देवदारु शैलेयमित्याद्योषधानि तथा सुवर्णमूलं अष्टादशयवपरिमितं निक्षिप्य तदुपरि वंशादिपात्रं निधाय तदुपरि वस्त्रं निधाय तत्र निर्ऋतिप्रतिमां रं
दृशतिमानलक्षणितमा स्वहितां स्थापयेत् ततः षोडशोपचारैः पंचोपचारैर्वा पूजयेत् उक्तं च शौनकेन पुण्यनिर्मितैः तोयैः प्रोक्षितायां क्षितौ ततः तत्रोदकुं
भं सुश्लक्ष्णं रक्तव्रणविवर्जितं अक्षतं समूलं निर्णीतं पूजयेन्निर्मलाम्भसा आकलशेष्वित्यनया कलशस्थापनं शुभं इमं मे गंगे इति मंत्रेण पूरयेत्तीर्थवारिणा
कुंभं च वस्त्रयुग्मवेष्टितं तन्मंत्रैः प्रपूरयेत् याः फलिनीरित्यनया क्षिपेद्दलौषधादिकं वस्त्रावगुंठितं कुर्यात् पूरयेत्तीर्थवारिणा कूर्चं हेमसमायुक्तं चूतपल्लवसं
युतं स्वस्तिकोपरि विन्यस्य क्षीरद्रुमसपल्लवैः स्योना पृथिवीत्यनिक्षिप्य ईशाने च निधापयेत् पंचरत्नानि निक्षिप्य सर्वौषधिसमन्वितं आवितं गंधपुष्पाद्यैः रामः
श्रीरुद्रं तत्र संजपेत् तत्र प्रतिरथं सूक्तं शाकुनं सानुवाकं च रक्षामंत्रं तथा [illegible] जपेत् त्रिपंचकं जपेत्सम्यग्गणेन सहस्रकं एकवारं तथा जापी २९

अथ शांतयो लिख्यंते तत्र प्रथमं मूलशांतिरुच्यते ॥ शौनक उवाच अथातः संप्रवक्ष्यामि मूलजातहिताय च मातापित्रोर्धनस्यापि कुलेशांतिहिताय च ॥
जातस्य द्वादशाहे तु जन्मर्क्षे वा शुभे दिने समावके वा मतिमान् कुर्याद्धि शांतिमादरात् वसिष्ठः सुसमे पुण्यदेशे तु मंडपं कारयेद्बुधः कुंडं च तद्बहिः कुर्या
द्दहयशो क्रमागतः पंचामृतं पंचगव्यं पंचत्वक्पल्लवानि च उदुंबरवटाश्वत्थप्लक्षाम्रत्वक् सपल्लवाः शतौषधीमूलशंखनवरत्नानि मृत्तिकाः कुष्ठं
मांसी हरिद्रे द्वे मुराशैलेयचंदनं वचाचंपकमुस्ताच सर्वौषध्यो दशैव हि गजाश्वरथ्यावल्मीकसंगमस्थानसंभवा ह्रद्गोराजनगरद्वारतश्चाष्टमृ
त्तिकाः शतौषधीमूलानि च अश्मरी १ सहदे २ अपराजिता ३ मुंडा ४ उशीर ५ वाला ६ अधःपुष्पी ७ शंखपुष्पी ८ ज्येष्ठीमधु ९ कोरकः १०
चक्रांकिता ११ विष्णुक्रांता १२ शिवक्रांता १३ मयूरशिखा १४ काकजंघा १५ भृंगराज १६ कुमारी १७ हय १८ कर्णिकार १९ अपामार्ग २०
बिल्व २१ घरमूला २२ अंबुज २३ उत्तरा २४ पुत्रजीव २५ दूर्वा २६ काश २७ कुश २८ साल २९ नाल ३० चक्रमर्द ३१ सिंही ३२ व्याघ्री ३३ अ
र्क ३४ प्लक्ष ३५ पलाश ३६ पिंपल ३७ वट ३८ उदुंबर ३९ तुलसी ४० उत्पल ४१ शतपत्र ४२ अतसी ४३ सारिवा ४४ कदंब ४५ वकुल ४६ शमी
४७ राहिक ४८ निर्गुंडी ४९ मुंडी ५० दंडी ५१ ब्राह्मी ५२ अशोक ५३ सूर्यभक्ता ५४ रुद्रजटा ५५ कदली ५६ बीजपूरक ५७ मदनक ५८ मुसा
ली ५९ पुनर्नवा ६० आम्र ६१ पाटल ६२ श्रीपर्णी ६३ करवीर ६४ चंपक ६५ गुडूची ६६ देवदारु ६७ अगरु ६८ चंदन ६९ कुटज ७० शिग्रु
७१ हरिद्रा ७२ जटामांसी ७३ वचा ७४ कुष्ठ ७५ तज ७६ दारुहरिद्रा ७७ बंधुजीव ७८ सिंधुवार ७९ सटी ८० अश्वगंधा ८१ मुस्ता ८२ कुरंटक
८३ पनस ८४ जीवक ८५ जाती ८६ मालती ८७ मधूक ८८ खदिर ८९ सप्तच्छद ९० सिरीष ९१ काकमाची ९२ शतावरी ९३ केतकी ९४ जंबु
९५ शाक ९६ वेतस ९७ आमलक ९८ सरल ९९ गिरिकर्णी १०० इति तिलमाषयवव्रीहिगोधूमाश्च सिद्धार्थं गवः चणकैः सहिताः सप्तसद्धीजानि च
सर्वेदाव ज्ञमौक्तिकवैडूर्यपुष्परागेंद्रनीलकं पंचरत्नमिदं प्रोक्तं मंत्रैः कुंभेषु निक्षिपेत् सुवर्णेन प्रमाणेन तदर्धार्धेन वा पुनः निर्मितं प्रतिमां कुर्याद्द्विज

मु॰ दी॰
न॰ प्र॰
२९
29

दाज्यंमहाव्याहृतिभिः क्रमात् हुत्वास्विष्टकृतंपश्चात्प्रायश्चित्ताहुतीर्हुनेत् आचार्योयजमानोवाग्नौतरोक्तुर्जं हुनेत् होमशेषंसमाप्याथवह्निमारोप्येत्ततः
कुंभाभिमंत्रणंकुर्याद्दक्षिणेनाभिमंत्रयेत् मृत्युप्रशमनार्थायजपेत्त्र्यंबकंशतं रुद्रकुंभोक्तमार्गेणरुद्रमंत्रंस्पृशञ्जपेत् धूपंदीपंचनैवेद्यंकुंभमुख्येनिवेद
येत् प्रसादयेत्ततोदेवमभिषेकार्थमादरात् भद्रासनोपविष्टस्ययजमानस्यऋत्विजः दारपुत्रसमेतस्यकुर्युःसर्वेभिषेचनं अश्वीभ्यामितिसूक्तेनपाव
मानीभिरेवच आपोहिष्ठेतिनवभिरापःद्वादशेनच सहस्राक्षेणचेनापिदेवस्यत्वेतिमंत्रकैः शिवसंकल्पमंत्रेणवरुणारोग्यमंत्रकैः योसौवज्रधरोदे
वोमहेंद्रोगजवाहनः मूलजातशिशोर्दोषंमातापित्रोर्व्यपोहतु योसौशक्तिधरोदेवोहुतभुङ्मेषवाहनः सप्तजिह्वश्चदेवोग्निर्मूलदोषंव्यपोहतु योसौदं
डधरोदेवोधर्मोमहिषवाहनः मूलजातशिशोर्दोषंव्यपोहतुयमोमम योसौखड्गधरोदेवोनिर्ऋतीराक्षसाधिपः प्रशामयतुमूलोत्थंदोषंगंडांतसंभवं
योसौपाशधरोदेवोवरुणश्चजलेश्वरः नक्रवाहःप्रचेताःसोमूलोत्थाघंव्यपोहतु योसौदेवोजगत्प्राणोमारुतोमृगवाहनःप्रशामयतुमूलोत्थंदोषं
बालस्यशांतिदः योसौनिधिपतिर्देवःखड्गभृन्नरवाहनःमातापित्रोःशिशोश्चैवमूलदोषंव्यपोहतु योसौपशुपतिर्देवःपिनाकीवृषवाहनः आश्लेषा
मूलगंडांतदोषमाशुव्यपोहतु विघ्नेशःक्षेत्रपोदुर्गालोकपालानवग्रहाः सर्वेदोषप्रशमनंसर्वेकुर्वंतुशांतिदाः तत्कुंभयोरभिषेकंतुसर्वदोषोपशांति
दं सर्वकामप्रदंदिव्यंमंगलानांचमंगलं वस्त्रांतरितकुंभाभ्यांपश्चात्तुस्नापयेद्बुधः ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनः यजमानोदक्षिणाभि
स्तोषयेदृत्विगादिकान् धेनुंपयस्विनींदद्यादाचार्यायसवत्सकां निर्ऋतिप्रतिमांकुंभवस्त्रेहेमंचदापयेत् ग्रहार्थवस्त्रप्रतिमास्तस्मैदद्यात्प्रयत्न
तः श्रीरुद्रजापिनेदेयःकलशोनड्वान्प्रयत्नतः तत्कुंभवस्त्रप्रतिमास्तस्मैदद्यात्प्रयत्नतः उक्तालाभेततोदद्यादाचार्यब्रह्मऋत्विजां तत्तन्मूल्यंप्रदातव्यं
शक्त्यावाथप्रदापयेत् दद्यादन्नंपायसादिब्राह्मणान्भोजयेच्छतं अलाभेसतिपंचाशद्दशकंतदलाभतः सर्वशांतेश्चपठनमाशिषांग्रहणंतथा गृही
स्नापयेद्विद्वान्निर्ऋतिःप्रीयतामिति इतिशौनकीयेमूलशांतिः अथाश्लेषाशांतिरप्येवमेवकार्या तत्रविभवेपूर्वोक्तवत्पंचकुंभाःस्थाप्याः असंभवेकुं राम:
२९

पावमानीस्त्यशान्नपेत् जपस्यपंचकुंभाश्चद्वयंवातदलाभतः श्रीरुद्रस्यैककुंभंचसर्वेसूक्तानितत्रवु तथान्यंपंचमंकुंभंरुद्रैर्नैर्ऋतीरण्येर्युतं चतुःप्रस्तवणांकुर्यात्पंच
वक्त्रांचतत्रवेत् वस्त्रावगुंठितंकुर्यान्मूर्ध्येत्तीर्थवारिणा पंचरत्नसमायुक्तमाम्रपल्लवसंयुतं एतस्मिन्नपिपंचरत्नसप्तमृत्तिकाशतमूलदेवदारुत्वमृत्योषधहेम
मूलानिक्षिपेत् तत्रशतमूलालाभे विष्णुक्रांतासहदेवीतुलसीचशतावरी मूलानीमानिगृह्णीयाछतलाभेविशेषतः तस्योपरिन्यसेत्पात्रंस्वर्णंवारौप्यम
न्ययं शुद्धवस्त्रेणसंछाद्यशतमूलानिनिक्षिपेत् कुंभोपरिन्यसेद्विद्वान्मूलनक्षत्रदेवतं अधिप्रत्यधिदेवौचदक्षिणोत्तरदेशयोः अधिदेवंजपेद्वादौजेष्ठा
नक्षत्रदेवतं एवंप्रत्यधिदेवंचपूर्वाषाढर्क्षदैवतं स्वलिंगोक्तैश्चमंत्रैश्चप्रधानादीन्प्रपूजयेत् पंचामृतेनसंस्नाप्यआवाह्याथसमर्चयेत् उपचारैःषोडशभिर्य
द्वापंचोपचारकैः रक्तचंदनगंधाद्यैःपुष्पैःकृष्णासितादिभिः मेषशृंगादिधूपैश्चघृतदीपैस्तथैवच सुरापोलिकमांसाद्यैःनैवेद्यैर्भोजनादिभिः मत्स्यमांससुरा
दीनिब्राह्मणानांविवर्जयेत् सुरास्थानेप्रदातव्यंक्षीरंसैंधवमिश्रितं पायसंलवणोपेतंमांसस्थानेप्रकल्पयेत् उक्तगंधाद्यलाभेतुयथालाभंसमर्चये
त् पुष्पांजलिंसमभ्यर्च्यहोमंकुर्याद्यथोदितं निर्वापप्रोक्षणादीनिचरोःकुर्याद्यथाविधि हविर्गृहीत्वाविधिवन्नैऋत्येवरुणात्वाहुनेत् अत्रवसिष्ठेनविशे
षोभिहितः मूलंप्रजामितिमंत्रद्वयस्यकश्यपऋषिर्निऋतिर्देवताअनुष्टुप्छंदः मूलायस्वाहा प्राजापतयेस्वाहेत्युपहोममंत्रौ पलाशसमिदाज्येनच
रुणाप्रसहस्रकं अथवाष्टोत्तरशतंप्रत्येकंजुहुयात्ततः मूलंप्रजामित्यृग्भिर्वाक्यैर्मंत्रद्वयेनच सावित्रसौम्यनैऋत्यमंत्रैरश्वत्थसंभवैः समिद्भिश्चति
लश्रीह्रीन्दुत्वाव्याहृतिभिस्ततः मूलंप्रजामित्यृष्टौवाक्यान्यर्चकोजपेत् अष्टोत्तरसहस्रंवाशतंवानियतात्मवान् अयंहोमप्रकारस्तुयास्वांतरविधु
योधेयः सोद्गुणःपरापरेनियतेदेवेनिवाप्नुनः पायसंघृतसंमिश्रंहुनेदष्टोत्तरंशतं समिदाज्यचरून्पश्चाछक्तितःसंख्ययाहुनेत् अधिदेवतयोश्चैवजुहु
यात्स्वस्वमंत्रकैः नक्षत्रदेवताभ्यश्चपायसेनतुहोमयेत् ऋणुक्षेत्रिपंचदशभिर्जुहुयात्स्मरंस्ततः गायत्र्याजातवेदसेत्र्यंबकमितिक्रमात् सौरायुर्ज
तिनामग्निंवालोप्यत्यग्निमेवच क्षेत्रस्यपतिनागणानांगिंदूंतंतथैवच श्रीसूक्तेनतथाविद्वान्समिदाज्यचरूंस्त्क्रमात् अष्टोत्तरशतैर्वापिअष्टाविं
शतिभिःक्रमात् अष्टाष्टसंख्ययावापिजुहुयाच्छक्तितोबुधः त्यनःसोमेनपायसंजुहुयान्नुनर्यादश चतुर्गृहीतमाज्यंचपात्रेरुद्रेतिमंत्रतः स्रुवेणजुहुया

मु० टी०
न० प्र०
३०

अतिलमुद्रां अक्षरापयेत् यथावित्तानुसारेण कुर्याद्ब्राह्मणभोजनं पितुरायुष्यवृध्यर्थं शांतिरत्र विधीयते इति गंडांतादिशांतिः अथ ज्येष्ठाशांतिः भरद्वा
जः ज्येष्ठादौ मातृ जननीं मातामहं द्वितीयके तृतीये मातुलं हंति चतुर्थे जननीं तथा आत्मानं पंचमे हंति षष्ठे गोत्रक्षयो भवेत् सप्तमे कुलनाशः स्यात् छ
मे ज्येष्ठसोदरः नवमे श्वशुरं हंति सर्वं संदशमे तथा इत्यादिकं घटिकाषट्कं सफलं श्रुतं अत्रापि मूलशांतिवत्सर्वं कार्यं तत्र विशेषः घटिकैकाचमेत्रांते
ज्येष्ठादौ घटिकाद्वयं तयोः संधिरिति ज्ञेयं शिशुर्गंडांतमीरितं ज्येष्ठांत्यपादे तु पितुः स्वस्य चापि विनाशकः ज्येष्ठर्क्षे कन्यका जाता हंति शीघ्रं धवाग्रजं ॥
शांतिं तस्य प्रवक्ष्यामि गंडदोषप्रशांतये तत्र चतुर्दिक्षु कुंभचतुष्टयं संस्थाप्य तन्मध्ये तस्मिन् पंचमं कुंभं संस्थाप्य पूर्ववत् रजादि विधाय तत्र वज्रांकु
शाधरं देवमैरावतगजान्वितं कुर्यात् शचीपतिं स्मरेद्देवं सुरनायकं शालितंडुलसंपूर्णकुंभस्योपरि पूजयेत् इंद्रायेंद्रो मरुत्वान् इति मंत्रेण वाग्य
तः पूजयेद्विधिना सम्यग्लोकपालगणान्वितं रक्तवस्त्रद्वयोपेतं देवराजं शचीपतिं पूजयेद्ब्राह्मणो मंत्रैः कुंभान्धीमान् प्रयत्नतः त्वन्नो अग्ने जपेद्रुद्रे
सत्यंत्वापि द्वितीयके सप्तसु ज्येष्ठा इति वै मंत्रं मे गंगे चतुर्थके पूजयेद्दश गंधाद्यैः श्वशुरः कलशानपि आनो भद्रा जपेद्वादौ भद्रा अग्ने द्वितीयके इदंरुक ए
वं जाप्यं जपेन्मंत्रं जपेत्ततः समिद्भिर्बिल्ववृक्षस्य शतमष्टोत्तरं शतं सर्पिषा चरुणा चैव मूलमंत्रेण वाग्यतः हुनेज्जाप्यं च तेनैव यत्नतः इंद्र भेयाति च तिला ॥
न्याहुतिभिर्हुत्वा शतमष्टोत्तरं पृथक् ततोभिषेकः ततो रूपंरूपमिति मंत्रेण तच्चक्षुरिति मंत्रेण आज्यावलोकनं पुनर्देवतापूजनं कृत्वा नमोस्तुसु
ग रनाथाय नमस्तुभ्यं शचीपते गृहाणार्घ्यं मयादत्तं दोषप्रशांतये अशेषमर्पयांतं संस्था कुर्याद्ब्राह्मणभोजनं अन्यत्सर्वं तु पूर्ववत् इति ज्येष्ठाशांतिः इ
तक्षये मतीपाते व्याघाते विष्टिवैधृतौ शूले गंडे च परिघे वज्रे च यमघंटके कालदंडे मृत्युयोगे दग्धयोगसमन्विते तस्मिन्नुदरिते मासे प्रसूतिर्यदि जाय
ते अतिदोषकरी प्रोक्ता तत्र पापयुते सति विचार्य तत्र दैवज्ञः शांतिं कुर्याद्यथाविधि यजनं देवतानां च ग्रहाणां चैव पूजनं दीपं शिवालये भक्त्या गो
दानेन प्रदापयेत् अभिषेकं शंकराय अथ चान्यस्य प्रदक्षिणा अभीष्टफलसिद्ध्यर्थं कुर्याद्ब्राह्मणभोजनं गणपतं पुरुषसूक्तं सौरं मृत्युंजयं शुभं शां
ति जाप्यं पुनश्चैव कृत्वा मृत्युंजयी भवेत् इत्युक्तरगार्ग्ये दुष्टयोगशांतिः कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः संक्रांतिश्च रवेस्तत्र जातो दारिद्र्य

30

कुंभद्वयं एकचरुद्वस्थापनं द्वितीये आश्लेषाप्रतिमास्थापनं अभिमंत्रणादि पूर्ववत् तत्राश्लेषाप्रतिमा सर्पाकारा अधिदैवतवहंसप्रतिमा प्रत्यधि
दैवतपितृप्रतिमा स्थाप्याः पूज्याश्च नमोस्तु सर्पेभ्य इति पूजामंत्र इतीरितः सर्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः फणकाधिधरस्तीक्ष्णाद्याभ
रणभूषितः एवंध्यात्वा ततोभ्यर्च्य होमकर्म समारभेत् अभिषेके विशेषः आश्लेषाऋक्षजातस्य मातापित्रोर्धनस्य च भ्रातृज्ञातिकुलस्थानां दो
षं सर्वं व्यपोहतु पितरः सर्वभूतानां रक्षंतु पितरः सदा सार्पेनक्षत्रजातस्य वित्तं च ज्ञातिबांधवान् सर्पाधीश नमस्तुभ्यं नागाधिप गृहाण मे मया
दत्तं सर्वारिष्टप्रशांतये इत्यर्घ्यमंत्रः मूलनक्षत्रवत्कुर्यात्सर्वदोषस्य नाशतः एतच्च मूलाश्लेषाशांतिकद्वयं विवाहे उपस्थिते श्वशुरस्य श्वश्र्वाश्च
सत्त्वे मूलाश्लेषोत्पन्नयोरपि वधूवरयोस्तत्तदरिष्टनिवृत्त्यर्थं विधेयं उपलक्षणत्वाच्च ज्येष्ठाविशाखोत्पन्नायाश्च वध्वा वरस्य ज्येष्ठबंधुकष्टशांतये
च नारदः मूलजा श्वशुरं हंति व्यालजा च ततोंगना ऐंद्रीपत्यग्रजं हंति देवरं तु द्विदैवजा शांतिर्वा पुष्कला चेत्स्यात्तर्हि दोषो न कश्चनेति इत्याश्ले
षाशांतिः अथ गंडशांतिः गंडशांतिं प्रवक्ष्यामि सोममंत्रेण भक्तिमान् कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्नवं अर्धाभिश्चतुर्भिर्वा द्वाभ्यां
वा शोभनं तथा तन्मध्ये पायसंपूर्णं खेनवनीतेन शोभिते राजतं चंद्रमभ्यर्च्य सितपुष्पसहस्रकैः दैवतः शुक्लवासास्तु शुक्लमाल्यांबरार्चितः सोमो
हमिति संचिंत्य पूजां कुर्यात्ततो द्विजः दद्यात् दक्षिणामिष्टां गंडदोषप्रशांतये शुक्लं वा गोंबरैश्च वस्त्रान्नपात्रसमन्वितं गंडदोषोपशांत्यर्थं दद्या
द्देवविदे शुचिः अत्रापि पूर्ववत्प्रतिमाकलशहोमाभिषेकादिकं कार्यं तिथिगंडे त्वनड्वाहं नाक्षत्रे धेनुरुच्यते कांचनं लग्नगंडे तु गंडदोषो विन
श्यति आद्यभागे पितुर्गंडे अंत्ये यात्राणामभिषेचनं इतरत्र शिशोर्मातुरभिषेकं च कारयेत् अन्यच्च उत्तरात्रिष्टचित्रासु पूर्वाषाढोद्भवस्य च कुर्याच्छां
तिं प्रयत्नेन नक्षत्राकारजां बुधः चित्राद्यर्धे पुष्यपादे द्वितीये पूर्वाषाढाधिष्ण्यपादे द्वितीये जातः पुत्रश्चोत्तराद्ये विघाती मातापित्रोर्भ्रातुरप्या
त्मनश्च द्विमासस्योत्तरा दोषः पुष्ये त्रिमासिकः पूर्वाषाढा षण्मासिकि चित्राषाण्मासिकं फलं नवमासं तथाश्लेषा मूले चाष्टौ समाः स्मृतं
ज्येष्ठा मासं पंचदशो पुत्रदर्शनवर्जिताः उत्तरे तिलपात्रं स्यात्तिष्ये गोदानमिष्यते अजं चित्रासु पूर्वाषाढे तु कांचनं यथाशक्तिर्हिमांशं

मु॰टी॰
न॰भ॰
३१

31

यां चंद्रदर्शनं स्यात्सा सिनीवाली सर्वैः प्रसिद्धा तत्रोत्पन्नस्य सिनीवाली शांतिर्विधेया अथ तस्यामेवामावास्यायां यदा नष्टेंदुकलात्वं स चंद्रक्षयकालो
मावास्यायां अंतिमक्षण एव तस्य च संक्रांतिसमयवर्तित्वस्य त्वेन दुर्ज्ञेयत्वात् अमावास्यायाः सप्तमाष्टमप्रहरयोः ज्ञात्वा क्षयकालस्य भाव्यकारे
ण परिभाषितत्वात् सप्तमाष्टमप्रहरात्मकः कालः कुहूशब्दवाच्यस्तत्रोत्पन्नस्य कुहूशांतिः पुनस्तस्यामेवामावास्यायां प्रथमप्रहरानंतरं सप्तमप्रहराद
र्वाक् प्रहरपंचकात्मकः कालो दर्शशब्दवाच्य इति तत्रोत्पन्नस्य दर्शशांतिर्विधेयेति एवमेकस्यामेवामावास्यायां कालभेदेन त्रैरूप्यं संभवति यदा त्वमा
वास्यायां चंद्रदर्शनाभावः तदा द्वयमेव दर्शत्वकुहूत्वरूपं संभवतीति अन्ये केचित्तु दर्शी शेषे चंद्रदर्शने सति परदिने याऽमावास्या सा सिनीवाली
त्युक्त्वा कुहूलक्षणं द्वयं ब्रुवते यस्यामिति अत्र परार्धस्य अमावास्यारूपस्यैव समानाधिकरण्येन ग्रहणात् किंच सिनीशब्देन श्वेता चंद्रकलावर्णवा
चिनः श्वेतशब्दाद्वर्णादनुदात्तात्तोपधात्तो न इति ङीप् नकारो सिनी तां वलते प्राप्नोतीति सिनीवालीति व्युत्पत्तिश्च चतुर्दश्युदितचंद्राश्रयायाममावा
स्यायां न युज्यते इति च तस्माद्दृष्टेंदुः सिनीवाली त्वमावास्यैवाभिधीयत इत्येव न्यायः अथ गोलगणितविरोधोऽन्यथा समादधुः । तत्र सा दृष्टेंदुः सि
नीवाली त्वादौ उदयास्ताधिकारोक्तरीत्या दृक्कर्मद्वयसंस्कृतस्य दर्शनयोग्यत्वे सति प्राक्क्षितिजक्रांतिवृत्तसंबंधवत्त्वग्रहादौ दर्शनशब्दवाच्यं मे
घाद्यावरणेनु शास्त्रीयदर्शने दृशि वर्तते आत्मादृष्टमदृष्टादिवत् तथैव दर्शनायोग्यत्वे सति प्राक्क्षितिजसंबंधवत्त्वमदर्शनशब्दवाच्यमिति पद
र्शनलक्षणं अतश्चंद्रदर्शनलक्षणवत्यमावास्या सिनीवाली नाम चंद्रादर्शनलक्षणवत्यमावास्या कुहूर्नाम लक्षणद्वयोनाक्रांताऽमावास्या द
र्शशब्दवाच्य इति अयमाशयः यदामावास्यान्त्योदयात् प्राक्घटिकात्रयवती तदा दृक्कर्मसंस्कारवशेन चंद्रस्य दृश्यत्वमागतं चेत्तदा सा संपूर्णा
ऽमावास्या सिनीवाली नाम तादृश्याममायां द्वितीयतृतीयोदयावधिकायामुत्पन्नस्यापि दर्शशांतये सिनीवाली शांतिस्तत्फलं चादृश्यं अथ यदि तिथिवृद्धौ वा
तस्या अमावास्या द्वितीयसूर्योदयानंतरमवशिष्टामावास्यायां तत्रोत्पन्नस्य कुहूशांतिरेव चंद्रादर्शनलक्षणसत्त्वात् यदि सैवामावास्यास्तोदयात्
प्राक्घटिकात्रयचतुष्टयं वा प्रतिपत्संबंधा तदा सिनीवाल्येव अथ तादृश्यामल्पायामधिकायां वाऽमावास्यायां तु दृक्कर्मसंस्कारवशेन चंद्रस्य दृश्यत्व

नवग्रहमखं कुर्यात्तस्य दोषस्य शांतये प्रथमं गोमुखाज्जन्म ततः शांतिं समाचरेत् गृहस्य पूर्वदिग्भागे गोमयेनानुलिप्य च अलंकृते तु देशे तु व्रीहिराशिं प्रकल्पयेत् पंचद्रोणमितं धान्यं तदर्धं तंडुलेन च तदर्धं तु तिलैः कुर्यात्तस्योपरि कल्पयेत् द्रव्यत्रितयराशौ तु अष्टपत्रे लिखेद्बुधः पुण्याहं वाचयित्वा तु आचार्यं वरयेत्पुरा राशौ प्रतिष्ठितं कुंभमव्रणं सुमनोहरं तीर्थोदकेन संपूर्णं सर्वौषधिपल्लवं पंचगव्यं पंचरत्नं वस्त्रयुग्मेन वेष्टयेत् तस्योपरि न्यसेत्पात्रं वस्त्रेण संयुतं प्रतिमां स्थापयेत्पश्चात् साधिप्रत्यधिदेवतां चंद्रादित्यौ तु तौ पार्श्वे मध्ये वैधृतिमर्चयेत् एवमेव व्यतीपातशांतौ संक्रमणस्य च अधिदेवं भवेत्सूर्यः चंद्रः प्रत्यधिदेवतं ततश्च व्याहृतिपूर्वेण तत्तन्मंत्रेण पूजयेत् त्र्यंबकेन मंत्रेण सोमपूजां समाचरेत् उत्सूर्य इति मंत्रेण सूर्यपूजां समाचरेत् आप्यायस्वेति मंत्रेण सोमपूजां समाचरेत् तत्राष्टोत्तरसहस्रं अष्टोत्तरशतं वा अष्टाविंशतिसंख्याजपं सर्वेषां जपं च आनो भद्रा अग्ने इति सूक्तं पुरुषसूक्तं त्र्यंबकं एतान् मंत्रान् कुंभान्स्पृष्ट्वा चतुर्दिक्षु जपं कुर्युः त्र्यंबकेन मंत्रेण समिदाज्यचरून् तंडुलेन अष्टोत्तरसहस्रं शतं वा अष्टाविंशतिर्वा मृत्युंजयेन मंत्रेण तिलहोमं समाचरेत् ततः समुद्रज्येष्ठा आपो हि ष्ठेत्यृचेन च असौ यास्मि निसूक्तेन पावमानीभिः त्र्यंबकेन उत्सूर्येति आप्यायस्वेति वैदिकमंत्रैः सुरास्त्वामभिषिंचंत्वित्यादिकैः पौराणमंत्रैश्चाभिषेकं कुर्यात् तत आज्यावेक्षणं अन्यहस्तिगोदानादिकं सर्ववत् इत्युत्तरगार्ग्ये व्यतीपातवैधृतिसंक्रांतिशांतिः अथ कुहूसिनीवालीदर्शशांतिः तत्र यस्याः कस्यचित्स्त्रिया वा स्याः अष्टौ भागान् कृत्वा प्रथमविभागे चंद्रदर्शनमस्ति चेदिति विचार्य यदा चंद्रदर्शनं तदा सिनीवाली यदा चंद्रादर्शनं तदा दर्शः सकलचंद्रक्षयस्तदा कुहूरित्यर्थः तदुक्तं संरोगपरिशिष्टे इंदुक्षयकालः आहूकाल इति मत्तुमें इंदुक्षयकालपरिगणमुक्तं अष्टमे यो चतुर्दश्याः स्त्रीयोगो भवति चंद्रमाः अमावास्याष्टमभागे पुनः किलभवेदणुः अन्नेंदुराद्यप्रहरे च निशेत् चतुर्थभागेन कलावशिष्टः तदंतरे तत्क्षयमेति कृत्स्नस्तस्येंदुज्योतिश्चक्र विरोधवर्तीति एतत्कारिकाभ्यामतद्व्याख्याकारेण कृतं प्रहरनवात्मकश्चेंदुक्षयकाल इति तत्रामायाः सप्तमाष्टमप्रहरौ तात्स्नक्षयकालः चतुर्दशीशेषयामद्वयी दर्शादिया सोच चंद्रक्षयनाकालस्मृति तत्राय मंत्रविधयविशेषः यस्याममावास्यायां प्रथमप्रहरे स्यात् प्रत्यक्षतो ॥ ॥ ०

मु०शी० अथ दर्शशांतिः अथातो दर्शजातानां मातापित्रोर्दरिद्रता तद्दोषपरिहारार्थं शांतिं वक्ष्यामि नारद तत्र संकल्पं विधाय तन्मध्ये कलशं संस्थाप्य तन्मध्ये निक्षि-
न०प्र० पेद्दूर्वांदधिक्षीरयवादिकं न्यग्रोधोदुंबराश्वत्थाः सचूतानिंबकास्तथा एतेषां च समूलानां त्वगादीन्पल्लवांस्तथा पंचरत्नानि निक्षिप्य वस्त्रयुग्मेन वेष्ट-
३२ येत् तत्र सर्वे समुद्राद्य इति आपो हिष्ठा तच्चेनेति कया नश्चित्र इत्यृचा यत्किंचेदमृचा चैव समुद्रज्येष्ठ इत्यृचा अभिमंत्र्य कुंभं तन्मध्ये पूर्वे निधापयेत्॥
दर्शस्य देवतायाश्च सोमस्य प्रतिरूपकाः प्रतिमां स्वर्णजां नित्यं रजतीं ताम्रजां तथा आप्यायस्वेति मंत्रेण सवितापश्चात्तमेव च उपचारैः समाराध्य
ततो होमं समाचरेत् समिधश्चरुदूर्वां क्रमेण जुहुयाद्द्विजः हुनेत्सवितृमंत्रेण सोमो धेनुं च मंत्रतः अष्टोत्तरशतं वापि अष्टाविंशतिसंख्यया अभि-
षेकादिकं पूर्ववत् हिरण्यं रजतं चैव वस्त्रमाधेनुश्च दक्षिणा ब्राह्मणान्भोजयेत्तत्र कारयेत्स्वस्तिवाचनं इति दर्शशांतिः कृष्णपक्षे चतुर्दश्याः प्रसूतेः
षड्विधं फलं चतुर्दशीं च षड्भागां कुर्यादाद्ये शुभं स्मृतं द्वितीये पितरं हंति तृतीये मातरं तथा चतुर्थे मातुलं हंति पंचमे वंशनाशनं षष्ठे तु धन-
हानिः स्यादात्मनो वंशनाशनं तस्मात्सर्वप्रयत्नेन शांतिं कुर्याद्विधानतः प्रतिमां कारयेच्छंभोः कर्षमात्रसुवर्णतः तदर्धार्धेन वा कुर्यात्सर्वल-
क्षणसंयुतां वृषभे च समासीनं वरदाभयपाणिकं शुद्धस्फटिकसंकाशं श्वेतमाल्यांबरान्वितं त्र्यंबकेन मंत्रेण पूजां कुर्याद्विधानतः तत्र
कलशादिवत्कलशस्थापनादिकं कृत्वा तत्र शंभुपूजां विधाय तत्र आवाहयेद्वरुणं मंत्रैरनेन च विधानतः इमं मे वरुणेत्यनया तत्त्वायामीत्य-
चा तथा त्वं नो अग्ने इत्यनया स त्वं न इति मंत्रतः आग्नेयं कुंभमारभ्य पूजां कुर्याद्यथाक्रमात् आ नो भद्रा इति सूक्तेन भद्रा अग्नेश्च सूक्तकं जप्त्वा
पुरुषसूक्तं च रुद्रं तु सूक्तमाजपेत् ईश्वरस्याभिषेकं च महापूजां च कारयेत् समिदाज्यचरून्होमयेत्तिलमाषांश्च सर्षपान् अश्वत्थस्य पालाश-
समिद्भिः खादिरैः शुभैः अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा अष्टाविंशतिभिर्वापि होमं कुर्यात्पृथक्पृथक् त्र्यंबकेन मंत्रेण तिलान्व्याहृति-
भिः क्रमात् स्वाहा एवं च होतव्याश्चास्मदुक्तविधानतः अन्यत्सर्वमाज्यावलोकनादि पूर्ववत् इति कृष्णचतुर्दशीजननशांतिः एकस्मिन्ने-
व नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चयात् तत्र शांतिं प्रवक्ष्यामि सर्वोपायमतेन तु अग्नेरीशान ॥ ॥०

न्मागतं सामावास्या संदर्शा कुहूर्नाम चंद्रादर्शनलक्षणसत्वात् तत्रापि कुहूशांतिरारंभ्या यदा तु सूर्योदयादनंतरं कियतीषु द्वित्रासु घटीषु अतिक्रांतासु ऽमावास्याप्रवृत्तिः एवं चतुर्दश्येवास्थिता तस्यामुषसि दृष्टक्रमेव शांतश्चंद्रो दृश्येमावादर्शित याप्यमावास्यायां चंद्रदर्शनलक्षणाक्रांतत्वात्सा संद र्णामावास्या दर्शो नाम तत्र दर्शजननशांतिर्विधेयेति एवममावास्याभेदेन सिनीवालीकुहूदर्शरूपं पक्षत्रयं सावकाशमिति गोलह्लानां मतं अथ प्रका रांतरेण सिनीवाली सर्वदा रिक्तिद्धा सैव कुहूस्तु पारिभाषिकी यदाह वसिष्ठः नक्षत्रे यस्य दर्शांतो विषनाड्यां भवेद्यदि कुहूयोगः समस्तातो व्याधिमृत्युभ यादिकृत् अयमर्थः यस्मिन्नक्षत्रे या विषनाड्या उक्ता तस्मिन्काले यदि दर्शस्य चरमघटिका भवेत्तन्नक्षत्रे च यस्य पुरुषस्य जन्म तन्नक्षत्रे जन्मकाले कालांतरे वा स्यात्तस्य पुंसो व्याधिमृत्युकृत् कुहूयोगो ज्ञेयः तत्र कुहूजननफलं शांतिश्च स्यात् कालांतरेपि कुहूयोगसंभवे शांतिर्विधेया अत एव जग न्मोहने यस्य जन्मर्क्षगश्चंद्रो विषनाड्यां कुहूर्भवेत् अभिचारेण किं तस्य स्वयमेव मरिष्यतीति अतो विषघटिकांतः पूर्वकालो दर्शशब्दवाच्य इति ए वं प्रकारत्रयेण सिनीवालीकुहूदर्शानां भेद उपादितस्तत्त्रयाणां संप्रदायमवक्ष्ये त्यलमतिप्रसंगेन अथ शांतिप्रकारः सिनीवाल्यां प्रसूता स्याद्यस्य भार्या पशुस्तथा गवाश्वमहिषी चैव शक्रस्यापि श्रियं हरेत् ये च संति द्विजाश्चान्ये स्वप्रसादोपजीविनः वर्जयेत्तानशेषांस्तु पशुपक्षि मृगादिकान्। द्विजाः पक्षिणः कुहूप्रसूतिरत्यर्थं सर्वदोषकरी मता यस्य प्रसूतिरेतेषां तस्यायुर्धननाशिनी नारीं विना च शेषाणां परित्यागो वि धीयते परित्यागात्तत्र शांतिं कुर्याद्धनया विचक्षणः प्रतिमां कारयेत्संभोश्चतुर्भुजसमन्वितं त्रिशूलखड्गवरदाभयहस्तां यथाक्रमात् श्वेतवर्णं श्वेतपुष्पैश्वेतांबरवेष्टितां त्र्यंबकेनमंत्रेण पूजां कुर्याद्यथाविधि इंद्रश्चतुर्भुजो वज्रांकुशचापससायकः रक्तवर्णो गजारूढो यजनं देवेति मंत्रतः पितरः कृष्णवर्णाश्चतुर्हस्ता विमानगाः पुष्पस्रक्तकमंडल्वभयानां च धारिणः ये सत्या इति मंत्रेण पूजां कुर्यादनंतरं कलशस्थापनपू जादि पूर्ववत् समिदाज्यचरो होमं तिलमाषैश्च सर्षपैः अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः अष्टोत्तरशतं स्वस्वं प्रत्येकं जुहुयाद्बुधः त्र्यं बकेनमंत्रेण तिलान्व्याहृतिभिर्हुनेत् [illegible] अभिषेकादि पूर्ववत् इति सिनीवालीकुहूशांतिः

मु०शी०
न०प्र०
३१

33

कुशोदकं आपो हि ष्ठादिभिर्मंत्रैरभिषिंचेत् ततः शिशुं मूर्ध्नि चाघ्रायेतं पुत्रं तन्मंत्रेण तदा पिता अंगादंगात्संभवसि हृदयादधिजायसे आत्मा वै पुत्रना
मासि स जीव शरदः शतं मूर्ध नि त्रिरवघ्राय तं शिशुं स्थापयेत् ततः पुण्याहं वाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः हरिद्रां साध्य विप्राय तां गां चाभ्यर्च्य दाप
येत् गोवस्त्रसुवर्णधान्यादि दत्वा दक्षिणान्वितं क्रमात् यथाशक्ति धनं दद्याद्ब्राह्मणेभ्यः स्वयं पिता ततो होमं प्रकुर्वीत स्वस्वशाखोक्तमार्गतः उल्ले
खनादिकं कृत्वा चाज्यभागांतमाचरेत् होमस्येशानदिग्भागे धान्योपरि शुभे घटे सपंचगव्यं संस्थाप्य तिलांस्तत्र विनिक्षिपेत् क्षीरद्रुमकषा
यांश्च पंचरत्नानि निक्षिपेत् वस्त्रयुग्मेन संछाद्य क्षीरादिभिरथार्चयेत् विष्णुं वरुणमभ्यर्च्य प्रतिमां च विधानतः आपो हि ष्ठेति तिसृभिस्तु मे
सोमरक्षस्पथ तद्विष्णोः परमं पदमृग्भ्यामिति स्मृतः क्रमतः आभिरार्भिः अष्टं च चतुरशा विंशति संख्यया अशक्तौ चाष्टसंख्यं वा दधिमध्वाज्यसंयुतं
आदित्यादिग्रहाणां च होमं कुर्यात् समन्त्रकं इति गोमुखप्रसवविधिः अथ प्रसंगात्त्रीतरशांतिः सुतत्रये सुता चेत्स्यात्तत्त्रये वा सुतो यदि मा
तापित्रोः कुलस्यापि तदारिष्टं महद्भवेत् जातस्यैकादशे वापि द्वादशाहे शुभे दिने आचार्यमृत्विजान्वृत्वा ग्रहयज्ञपुरःसरं ब्रह्मविष्णुमहे
शेंद्रप्रतिमाः स्वर्णतः कृताः पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः पंचमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया रुद्रसूक्तानि चत्वारि शांतिसूक्तानि
सर्वशः द्विजमेको जपेद्धोमकालेषु चित्समाहितः आचार्यो जुहुयाद्धत्र समिदाज्यतिलांश्चरुं अष्टोत्तरसहस्रं वा शतं वा विंशतिं तु वा देवताभ्य
श्चतुर्वक्त्रादिभ्यो ग्रहपुरःसरं कोस्याज्यवीक्षणं कृत्वा शेषं पूर्ववदाचरेत् इति त्रीतरशांतिः अथ सूर्यचंद्रग्रहणसमयजननशांतिः ग्रहणे चं
गु४ द्रसूर्यस्य प्रसूतिर्यदि जायते व्याधिपीडा तदा स्त्रीणामादौ तुर्स्नातु दर्शनात् शांतिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया यस्मिन्नृक्षे विशेषेण
ग्रहणं संप्रजायते तदृक्षाधिपतेरूपं सुवर्णेन प्रकल्पयेत् यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् सूर्यग्रहे सूर्यरूपं सुवर्णेन स्वशक्तितः
चांद्रे चंद्रग्रहे धौतं राजतेन विशेषतः राहुरूपं प्रकुर्वीत नागेनैव विचक्षणः नागेन सीसकेन स्यु शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् तस्योपरिष्टा
से द्वीपान् अन्यैर्वस्त्रं सुशोभनं त्रयाणां चैव रूपाणां स्थापनं तत्र कारयेत् रक्तास्तरं क्रं गंधं रक्तपुष्पांबराणि च सूर्यग्रहे प्रदातव्यं सूर्यप्री

शान्तिरत्न

श्वेतवस्त्रं श्वेतमाल्यं श्वेतगंधाक्षतादिभिः चंद्रग्रहे प्रदातव्यं चंद्रप्रीतिकरं च यत्। राहवे चैव दातव्यं कृष्णपुष्पां वराणि च। दद्यात्ततस्तन्नाथाय श्वे
तगंधानुलेपनं स्पृक्ष्ये सह्जये ह्रीमानाक्तस्मेति मंत्रतः। चंद्रग्रहे च पालाशैः समिद्भिर्जुहुयात्ततः हवींभिर्जुहुयाद्धीमान्राहोः संप्रीणनाय च सयवाः
समिद्भिर्मंत्रं श्वतक्षोभ्ये मेषायजुहुयाद्बुधः मेषायनक्षत्राधिपतये आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः पंचगव्यैः पंचरत्नैः पंचत्वक्पंचपल्लवैः
जलैरोषधिकल्कैश्च सहिते कलशोदकैः औषधिकल्कैः सर्वौषधिकल्कैः अभिषेकं प्रकुर्वीत यजमानस्य यत्नतः मंत्रैर्वारुणदैवत्यैरापोहिष्ठादि
भिः सह इमं मे गंगे इति वरुणस्त्वा यामीति मंत्रकैः अभिषेके निवृत्ते तु यजमानः समाहितः अनेन विधिना शांतिं कृत्वा सम्यग्विशेषतः आ कालमृत्यु
शोकं च व्याधिपीडां न वाप्नुयात् सौख्यं सौमनसं नित्यं सौभाग्यं लभते नरः। दुष्टग्रहणजातानां सर्वारिष्टविनाशनं कथितं भार्गवेनेदं शौनक।
यमहात्मने इति शौनकोक्ता ग्रहणजननशांतिः अथ ज्वराद्युत्पत्तिकालीननक्षत्रशांतिः तत्र साधारणो विधिः यस्मिन्नक्षत्रे ज्वरादिपीडा भवति त
न्नक्षत्राधिदेवताप्रतिमां सुवर्णेन कारयित्वा अमुकनक्षत्रसंभूतव्याधिशांत्यर्थं नक्षत्रशांतिं करिष्ये इति संकल्प्य शुचिप्रदेशे गोमयेनोपलि
प्ते तंडुलैश्चतुरस्रमंडलं निर्माय तन्मध्ये तत्तद्देवतावर्णवस्त्रद्वयवेष्टितं गंधपुष्पचंदनादिचर्चितं कलशं धान्यस्योपरि विन्यस्य तत्र सर्वौषधीः पं
चरत्नानि पंचगव्यानि सप्तमृत्तिकाः पंचपल्लवान्स्वस्वमंत्रेण कलशे निक्षिप्य सर्वे समुद्रा इति तत्र तीर्थान्यावाह्य तत्त्वा यामीति वरुणमावाह्य
संपूज्य स्वस्वगृह्योक्तविधिनाग्निं प्रतिष्ठाप्य आज्यभागांते तत्तन्नक्षत्राधिदेवतामंत्रेण तन्नक्षत्रपूर्वोत्तरनक्षत्रदेवतामंत्रेण तत्तद्धोमेन च
होमं कृत्वा तेन वरुणविकलशेन यजमानाभिषेके विहिते ततः प्रतिमां सगोब्राह्मणाय दद्यात्। असौ साधारणो विधिः उक्तं च यस्मिन्नृक्षे भवे
त्पीडा तन्नक्षत्रस्य देवता सुवर्णनिर्मितां कृत्वा स्वरूपेण प्रयत्नतः शुचिः गोमयेनानुलिप्ते स्थमंडले शुभलक्षणे चतुरस्रं च संकीर्णं तंडुलैश्च कृतां कृते
कृत्वा तु स्थंडिलं तत्र यत्नतः कुंभपात्रं तत्र संस्थाप्य च सुधीः कुर्यात्तंडुलानां महावर्यं तत्र प्रमाणं खारी वा द्रोणं वा रक्षा शक्त्यपेक्षया अभावे पं
च वा द्रोणार्द्रोणं वा तदभावतः ईशानकोणदेशे तु कलशं स्थापयेत्सुधीः निधाय हविषं तत्र कलशे शक्त्यपेक्षया पीठं तु स्वर्वेतः स्थाप्यं नम्रव॥

मु॰री॰
न॰प्र॰
२४

स्त्रेण संयुते स्वस्तिकं तण्डुलानां चतुर्भागानां तत्र संलिखेत् तन्मध्ये देवतां लिखेन्नक्षत्राधिपस्य वै यस्मिन्नृक्षे भवेद्रोगस्तस्यर्क्षाधिपे सुधीः उडुनोः
जयेद्यत्नाद्विधिमत्राधिदैवते देवतायास्तत्र सस्वं मन्त्रलिङ्गपदं च हयं च तस्य पद्योक्तं अभावे प्रकृते तथा तन्त्रं वै विदुषा नीयहोमतन्त्रं प्रकल्पयेत् पं
चोपचारसंयुक्तो पूजां तत्र प्रकल्पयेत् स्वगृह्योक्तविधानेन कुर्यादग्निमुखं सुधीः कलशं जलपूर्णं च वस्त्रयुग्मेन वेष्टितं निधाय चौषधीस्तत्र पंचप
ल्लवसंयुताः सप्तरत्नं नमरां कुंभो आकवालमकल्पयेत् इममे वरुण इत्येवं जलमन्त्रेण वा पुनः सर्वे समुद्राः सरित इति मन्त्रं च संस्मरेत् यच्चिद्धि ते वि
शोधयेत्मादि सकंजयेत्पुनः आवाहयेद्रुद्रदेवं वरुणं पयसांपतिं एवं नक्षत्रशान्त्यर्थं विदध्यात्सर्वपीडिको सामान्योपविधिः प्रोक्तो नक्षत्राणां
प्रपूजने सर्वौषधीनां दुःप्राप्तौ भवेदेकाशनावरी सर्वेषामपि गन्धानामभावे चन्दनं मतं प्राप्तपत्रे सुमनसां धूपाभावे च गुग्गुलुः नैवेद्यानामभावे
तु पायसं संप्रदर्शितं मन्त्राणामप्यभावे तु गायत्रीमन्त्र उत्तमः होमद्रव्यस्य दुःप्राप्तौ तिलाः प्रोक्ता मनीषिभिः घृष्टोत्तरसहस्रं चरुणाशनसुराहुत
मिति अथ नक्षत्रदेवताध्यानानि देवतेऽश्विनौ तत्र द्विभुजौ शुक्लवर्णकौ सुधाकलशसंयुक्तौ कमण्डलुधरौ शुभौ १ यमस्तु देवता तत्र कृ
ष्णवर्णो द्विबाहुकः तुलापवाहनः श्रीमान्पाशदण्डधरः प्रभुः २ अग्निस्तु देवता तत्र रक्तवर्णोऽजवाहनः चतुर्भुजो धृताम्भःस्रुक्स्रुववरदाभ
यः ३ रक्तवर्णश्चतुर्बाहुर्हंसारूढश्चतुर्मुखः पद्माक्षसूत्रवरदाभयहस्तो निरामयः ४ सोमो हि देवता तस्य श्वेतवर्णः शुभाकृतिः दशाश्वरथमा
रूढः श्वेताश्वोपि निगद्यते ५ रुद्रो हि देवता यस्य वृषारूढश्चतुर्भुजः त्रिशूलखड्गवरदाभयहस्तः प्रकीर्तितः ६ चतुर्भुजादितिः पीतसाक्ष
सूत्रकमण्डलुः वरदाभयहस्ता सा कार्या स्वर्णमयी शुभा ७ चतुर्भुजः पीतवर्णो देवतास्य बृहस्पतिः दण्डाक्षसूत्रपाणिस्तु साभयः सकमण्डलुः ८
सर्पस्तु देवता तत्र महामण्डलिसपृथक् सुविलग्नशिरस्कण्डो मकपिङ्गललोचनः ९ पितरो देवता तत्र कृष्णवर्णाश्चतुर्भुजः भक्षास्त्राभयदक
मण्डलुधराः शुभाः १० पूर्वाफाल्गुनिकाधिपो भगो देवः प्रकीर्तितः रक्तवर्णो गजारूढो द्विभुजो भयपद्मकः ११ अर्यमा देवता पद्मसमध्यस्थः पद्मव
र्णकः पद्माभयकरः श्रीमान्स्वर्णमूर्तिर्महाद्युतिः १२ सविता देवता तस्य सप्ताश्वरथवाहनः द्विभुजो रक्तवर्णस्यात्पद्मासनसमाश्रयः १३

मु०शां०
न०ग्र०

म्यो विशिष्टे म्योयथाशक्त्या च दक्षिणां ब्राह्मणान्भोजयेत्पश्चाच्छांतिवाचनपूर्वकं एवं यः कुरुते सम्यक्तस्माद्दोषात्प्रमुच्यते इति काकमैथुनदर्शनशांतिः त
थैव कपोतादिशांतिः आरोहयेद्गृहं यस्य कपोतो वा प्रवेशयेत् स्थानहानिर्भवेत्तस्य महानर्थपरंपरा दोषापनोदने गेहे दरिद्राणा शिवाय च तस्य शांति
श्च कर्तव्या जपहोमविधानतः ब्राह्मणान्वरयेत्तत्र स्वस्तिवाचनपूर्वकं यो उशाहादृशार्थेवाश्मोतस्मान्नैकिपापएन देवाः कपोत इत्यादि ऋग्भिः पं
चभिर्जपं लक्षसंख्यात्मकं यत्नेन स्वगृह्योक्तविधानतः ईशान्यां स्थापयेद्वह्निं सुस्थांते ऽष्टोत्तरं शतं प्रत्येकं समिदाज्यान्नैः प्रतिमूर्णवपूर्वकं यत इंद्र भयामहे
स्वस्तिदेतिऋक्पंचके त्रिभिर्मंत्रैश्च जुहुयात्तिलान्तथा हुतिभिस्ततः जपाहुतीस्ततो हुत्वा कुर्यात्पूर्णाहुतिं स्वयं विप्रेभ्यो दक्षिणां दद्यात्तद्वोः शां
तिं च ततो जयेत् ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुंजीत बंधुभिः एवं यः कुरुते सम्यक्तस्माद्दोषात्प्रमुच्यते पिंगलायास्तथैवं मधुवल्मीकयोरपि स
र्पाणां मंदिरे हानिः क्रव्यसप्तनिर्गमे प्राकारे च पुरद्वारे देवागारे च वीथिषु ग्रामस्थानतस्थलेषु चैव गुरुकल्मनया ततः शांतिकर्माखिलं कार्यं पूर्वोक्तेन

त्रिकांगपंचाग्निकुवेदवह्नयः प्राग्भेषु नेत्राग्निशरेंदुकृताः वेदाग्निरुद्राग्नियमाग्निवह्नयोऽब्धयः शततद्विद्विरदाभ्रतारकाः ५८

क्रमेण तु इति कपोतपिंगलामधुवल्मीकादिशांतिः अथ पल्ल्याः पतने शरटस्य वा अवरोहणे फलं शांतिश्च पारयोर्जघने पाण्योर्गुदे तु स्वे चजं च
पोः पल्ल्याः पाते तथारोहे शरटस्य फलेन सन् अन्यत्र तु भवेत्पश्चात्सचैलं स्नानमाचरेत् दत्वाशिवालये दीपं मुखमाज्ये विलोकयेत् पल्लीशरट
योरूपं सुवर्णेन विनिर्मितं तदर्धार्धप्रमाणेन वित्तशाठ्यविवर्जितः वस्त्रयुग्मेन संवेष्ट्य अन्नि यापयति वेदयेत् पल्लीशु इति पल्लीशरटयोः शांतिः
अथ यत्र सत्र प्रसंगादेवाश्विन्यादीनां भानां तारका उपजातिकयाह त्रिकांगेति तथा च श्रीपतिः वह्निस्त्रिकाग्निषु गुणेंदुकृताग्निभूतबाणाश्विनेत्र
शरभूकुयुगाब्धिरामाः रुद्राब्धिरामगुणवेदशतद्वियुग्मदंताबुधैर्निगदिताः क्रमशो भतारा इति ननु तत्र संमुनिवाक्ये सप्तविंशतिभानि प्रतीयते मू
लेषर्क्षाविंशतिरिति विरोधे उच्यते उत्तराषाढाश्रवणयोर्मध्ये अभिजिन्नक्षत्रस्य तारा षड्वयं पूर्वाषाढोत्तराषाढयोर्ह्येपाः द्वे पूर्वाषाढायां इति नारदेनापि तथैवा
भिधानात् तत्राश्विन्यादिरसतारा एवं भरण्यादीनां साभिजितं तारासंज्ञेया तारामानो किं प्रयोजनमाह वराहः नक्षत्रजमुद्वाहे फलमब्दैस्तार



35

न्द्रशापद्मस्थितिस्त्वग्निवर्णः स्यात्स चतुर्भुजः पद्मासनाक्षवलयः पद्मालः पद्मकरः प्रभुः १४ वायुस्तु देवता तत्र मृगारूढश्च मोचकः ध्वजाचर्मधरः
श्रीमान् द्विभुजः परिकीर्तितः १५ इन्द्राग्नी देवता तत्र गजाजावाहनौ पुनः चतुर्बाहू रक्तवर्णौ निजशास्त्रधरौ तथा १६ चापांकुशाभयैर्युक्तो त
थासप्तविराजितो १६ पद्मासनो रक्तवर्णो मित्रस्स्यात्तु देवता पद्माभयकरः श्रीमान् द्विभुजः परिकीर्तितः १७ शाक्रे ऐरावतारूढो हरिर्वा सिंह
सने विभुः श्वेतवर्णो वज्रधरो भयपाणिर्महाभुजः १८ निर्ऋतिर्देवता तत्र प्रेतारूढश्च मोचकः खड्गखेटकधारी च द्विभुजः परिकीर्तितः १९ ज
ले तु देवतास्तस्य शुक्लवर्णाशुभाकृतिः वरुणोऽस्य जलस्यापि स्वामी प्रज्वलनो मतः मकरे वाहने विप्रो भवेत्पाशकरो ध्रुवं २० विश्वेदेवा देवताश्चश्वे
तवर्णाश्चतुर्भुजाः वरदाभयहस्ताश्च सासनस्थां तु भाजनाः २१ विष्णुस्तु कृष्णवर्णः स्यात्पन्नगाशनवाहनः शंखचक्रगदापाणिः पीतवासश्चतुर्भु
जः २२ वसवो देवतास्तत्र श्वेतवर्णाश्चतुर्भुजाः वरदाभयहस्ताश्च सासनस्थास्तु जासनाः २३ वरुणो देवता तत्र मकरोपरि संस्थितः पाशपाशध
रः श्रीमान् महापद्मधरस्तथा २४ अजैकचरणो रुद्रो देवतास्य प्रकीर्तिता खड्गचर्मधरो वाग्मी भुजद्वयसमावृतः २५ अहिर्बुध्न्याभिधो रुद्रो दे
वतास्य प्रकीर्तिता श्वेतश्चतुष्करः पद्मवरदाभयपाशभृत् २६ पूषा तु देवता तत्र पद्मवर्णो तु जासनः द्विभुजः पद्मपाणिः स्यात्स पद्मगर्भस्थितो वि
भुः २७ इति नक्षत्रदेवताध्यानं अथोपयुक्तत्वात्प्रसंगात् काककाकमैथुनदर्शनशान्तिः दिवा वा यदि वा रात्रौ यः पश्येत्काकमैथुनं स नरो मृत्यु
मृत्युः मासान्ते ह्यथवा स्थाननाशने काकघातं न यद्वा विदधीत् अथ वत्सरं पितृन् देवान् द्विजान् भक्त्या सम्पूज्य वाभिवादयेत् जितेन्द्रियो जित
क्रोधः सत्यधर्मपरायणः तद्दोषशमनार्थाय शान्तिकर्मसमारभेत् गृहस्येशानदिग्भागे होमस्थानं प्रकल्पयेत् गृह्योक्तविधिना तत्र प्रतिष्ठा
प्य हुताशनं प्रतिमंत्रं स्रुवकेन अथ मृत्युंजयेन च आहुतीर्मिश्रो हि तिलैर्जपाद्यं तु प्रकल्पयेत् पूर्णाहुतिं च जुहुयात्कृतोऽस्तु विरलेऽस्तु नः
स्वर्णशृंगीं रौप्यखुरां कांस्यदोहां पयस्विनीं सवत्सां वस्त्रसंयुक्तां विप्राय सुसंयुतां नरः धेनुं तदर्धेन दद्याद्दक्षिणया युतां यथावित्तानुसारे
णान्यूनाधिकं त्वकल्पनात् आचार्याय प्रयोक्तिपूजायतां गां दद्यात्तु दुर्दिने यस्मात्त्वं पृथिवी सर्वा धेनो केशवसन्निभे सर्वपापहरा नित्यमतः शां

मु॰टी॰
न॰प्र॰
४६

36

क्षिणोत्तरायणे कुर्वन्न तत्फलमवाप्नुयात् यदा तु दक्षिणायन एव जलस्थितिसंभवः तदा न कालनियमः न कालनियमस्तत्र कारणमिति भविष्यत्पुराणोक्तेः अथ क्रूरप्रकृतीनां दक्षिणायनेपि स्थापने कार्यमित्युक्तं वैखानससंहितायां मातृभैरववाराहनरसिंहत्रिविक्रमाः महिषासुरहंत्री च स्थाप्या वै दक्षिणायने नारदः विचैत्रेष्वेन मासेषु माघादिषु च पंचसु यद्दिनं यस्य देवस्य तद्दिने तस्य संस्थितिः अथ लग्नशुद्धिः शशांकपापैः चंद्रसूर्यभौमशनिराहुकेतुभिः त्रिभवांगसंस्थैः तृतीयषष्ठैकादशस्थानस्थितैरुपलक्षिते लग्ने तथा सत्खचरैः शुक्रबुधगुरुभिः व्ययाष्टगैः द्वादशाष्टमव्यतिरिक्ताखिलस्थानस्थैः सद्भिः देवादिप्रतिष्ठा भवति शुभा अथ सूर्यो मृगेन्द्रे सिंहलग्ने स्थाप्यः तथा को ब्रह्मा घटे कुंभे विष्णुर्युवतौ कन्यायां हरः शिवो महादेवो नृयुग्मे मिथुने च पुनर्देव्योऽङ्गोदये हि तनौ द्विस्वभावराशौ मिथुनकन्याधनुर्मीनलग्नेषु क्षुद्रा देव्यश्च तु षष्ठियोगिनीप्रभृतयः चरलग्ने मेषकर्कतुलामकरेषु सर्वे इमे उक्तानुक्ता स्थिरर्क्षे वृषसिंहवृश्चिककुंभेषु तथा अथ पुष्ये ग्रहा इति ग्रहाश्चन्द्रादयो धिष्ण्येषु नक्षत्रेषु स्थाप्याः उपलक्षणमेतत् सूर्यस्य हस्तनक्षत्रे न स्थापनं इन्द्रब्रह्मणोः पुष्यश्रवणाभिजित्सु कुबे

त्र्यंत्याष्टगैः सत्खचरैर्मृगेन्द्रे सूर्यो घटे को युवतौ च विष्णुः ॥ २२ ॥ शिवो नृयुग्मे द्वितनौ च देव्याः क्षुद्राश्चरे सर्व इमे स्थिरर्क्षे पुष्ये ग्रहा
विघ्नपयक्षसर्पभूतादयोऽन्त्ये श्रवणे जिनश्च ॥ २३ ॥ ॥ इति मुहूर्तचिंतामणौ नक्षत्रप्रकरणं द्वितीयं २

रलकयोस्तु राधायां दुर्गादीनां मूले समर्थीनां स्वाधिष्ठितनक्षत्रे लक्ष्मीव्यासवाल्मीकपरस्त्वानां उष्णे स्थापनं तदुक्तं रत्नमालायां पुष्ये तु सभिजित्सु चेश्वरकयो विनाधिपस्कंदयोर्मैत्रेति स्मृत्ये: करे निर्ऋतौ भे दुर्गादिकानां शुभे समर्थयोयत्र वसौ तिथिस्वे कार्या प्रतिष्ठा खलु तन्त्रतेषां श्रीव्यासवाल्मीकिघटोद्भवानां तथा स्मृता वाक्पतिभे ग्रहाणामिति अथ विघ्नपतिः विघ्नपो गणेशः यक्षो देवयोनिः सर्पो वासुक्यादयः भूतो देवयोनिः विद्याधरोऽप्सरोयक्षरक्षोगंधर्वकिंनराः पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनय इत्यमरः आदिशब्देन राक्षसासुरप्रथमसरस्वतीप्रभृतयः अंत्ये रेवत्यां स्थाप्याः तथा श्रवणे जिनो बौद्धश्च स्थाप्याः उपलक्षणं चैतत् इन्द्रकुबेरवर्जितानां लोकपालानां धनिष्ठायां स्थापनं तथा च श्रीपतिः गणपविघ्नहरक्षोयक्षभूतासुराणां प्रथमफणिसरस्वत्यादिकानां च पौष्णे श्रवसि सुगतनाम्नां वासवे लोकपानां निगमशिवमपि [illegible] भवंति लिरेषु २३ इति श्रीदैवज्ञानंतसुतदैवज्ञरामविरचितायां स्व

अथाश्विन्यादीनामाकृतित्रिष्टुप्जातिकयोर्वृत्ताभ्यामाह अश्व्यादिरूपमिति अश्विन्यादिनक्षत्राणां रूपमाकृतिरुच्यते तत्राश्विन्यास्तुरगास्यं अश्वमु
खसदृशं रूपं भरण्यायोनिर्भगसदृशं कृत्तिकाया नापितक्षुरसदृशं रोहिण्याश्चनः शाकटसदृशं मृगस्य राणास्यं हरिणमुखसदृशं आर्द्रायामणिस
दृशं पुनर्वसोर्गृहसदृशं पुष्यस्य पृषत्कोबाणस्तत्सदृशं आश्लेषायाश्चक्राकारं मघायाभवनेगृहसदृशं पूर्वाफल्गुन्याः मंचः खट्वाकारं उत्तराफाल्गु
न्योःशय्याकारं हस्तस्यहस्ताकारं चित्रायामौक्तिकाकारं स्वात्याविद्रुमंप्रवालसदृशं ५९ तोरणबलिनिभमिति विशाखायास्तोरणाकारं अनुराधा
यावलिभेतः पुंजाकारं ज्येष्ठायाः कुंडलाकृतिः मूलस्यसिंहपुच्छाकारं पूर्वाषाढायागजदंतसदृशं उत्तराषाढायामंचकसदृशं अभिजितस्त्रिकोणाकारः
श्रवणस्यत्रिचरणसदृशं धनिष्ठायामर्दलसदृशं शततारायावृत्तंवर्तुलं पूर्वाभाद्रपदायामंचकसदृशं उत्तराभाद्रपदायायमलाभं रेवत्यामर्दलमर्द

अश्व्यादिरूपंतुरगास्ययोनिःक्षुरोनसणास्यमणिर्गृहंच पृषत्कचक्रेभुवनंचमंचःशय्याकरोमौक्तिकविद्रुमंच ५९ तोरणंबलि
निभंचकुंडलंसिंहपुच्छगजदंतमंचकाः त्र्यस्त्रिचत्रिचरणाभमर्दलोवृत्तमंचकयमाभमर्दलाः ६० जलाशयारामसुरप्रतिष्ठा
सौम्यायनेजीवशशांकशुक्रे दृश्येमृदुक्षिप्रचरध्रुवेस्यात्पक्षेसितेस्वर्क्षतिथिक्षणेवा ६१ रिक्तारवर्जेदिवसेतिशस्ताशशांक

गाकारंस्वरूपमित्यर्थः ६० अथजलाशयारामदेवप्रतिष्ठामुहूर्तंसामान्यतोलग्नशुद्धिं देवताविशेषेणालग्नशुद्धिं पापेस्त्रिभवांगसंस्थैः ॥ ॥
नैस्त्रविशेषंचोपजातिकात्रयेणाह जलाशयेति रिक्तारेति शिवोन्त्यमेति च जलाशयाःवापीकूपतडागादयः तेषांप्रतिष्ठाउत्सर्गः आरामउपवनं
तस्याप्युत्सर्गः सुरादेवाविष्ण्वादयः तेषांप्रतिष्ठापने सौम्यायनेउत्तरायणे तथाजीवशशांकशुक्रे दृश्येउदितेसति तथामृदुध्रुवक्षिप्रचरनक्षत्रेषु तथासि
तेशुक्लपक्षे तथास्वर्क्षतिथिक्षणेवा ६१ तथारिक्तारवर्जेदिवसे रिक्तातिथिभौमवारव्यतिरिक्ततिथिवारे शुभंवक्ति येदिने प्रतिष्ठा जलाशयारामदेवानांक
र्मणकर्माहेत्वोपभोग्यत्वप्रजायोग्यत्वरूपा [illegible] तथा [illegible] स्थैतानामशाख्यादिप्रतिष्ठा उत्तरायणे माघादिपंचमासेशुक्लपक्षेप्याद्यंचमीदिन द

रविरद्विजभौमवारेसंक्रांतौदिनकरस्यतन्मासेपित्तकफानिलजामयनरपतिकलहस्तेहदिश्च बुधगुरुसितचंद्राहे सतिसंक्रांतावनामयंनृणां क्षितिपतिनि
करक्षेमंसस्यविवृद्धिविंधर्मिणांपीडा जन्मनक्षत्रेसंक्रांतिफलंदीपिकायां यस्यजन्मर्क्षेमासाद्यरविसंक्रमणंभवेत् तन्मासाभ्यंतरेतस्यरोगक्लेशधन
क्षयाः तथारत्नदीपेहयोरजनीसिद्धार्थलोभसंयुतैः स्नानंजन्मनक्षत्रेरविसंक्रांतौनृणांशुभंद् अन्यच्चवसिष्ठः अजकन्यादयकर्किणिसंक्रांतौयदिन
चेद्दधं अपायमरणंभूभृतयुद्धंमनष्यैत्वरदिश्च हयरश्चिकतुलामकरेहृष्टिः स्यात्संक्रमविषये विस्फोटामयतस्करपीडादृष्टिः कृशानुभयं अथसौम्
याम्यायनमिति मकरकर्कटयोःसंक्रांतिस्तदाक्रमेणसौम्यायाम्यायनंनिरुक्तं मकरेउत्तरायणंकर्केयाम्यायनंस्यात् २ अथाचषिवसंक्रांतिषुवड
शीत्यादिसंज्ञात्तुक्कभाहाषडशीत्याननमिति धनुर्मिथुनकन्यामीनेषुअर्कसंक्रमेणषडशीत्याननंषडशीतिमुखमितंस्यात् तुलामेषयोःसंक्रांतिविषु



सूर्योदयेसकलदिग्गिजनंचसौम्ययाम्यायनंमकरकर्कटयोर्निरुक्तं २ षडशीत्याननंचापनृयुक्कन्याझषेभवेत् तुला
जौविषुवंविष्णुपदंसिंहालिगोघटे ४ संक्रांतिकालादुभयत्रनाडिकाःपुण्यामताःषोडशषोडशोष्णगोः ॥ ० ॥

वत्संज्ञा वृषसिंहवृश्चिककुंभेषुअर्कसंक्रांतिर्विष्णुपदसंज्ञकाः ४ संक्रांतौगौणमुख्यकालस्तुपजात्याहसंक्रांतिकालादिति गणितमार्गेणयदुष्णगोः
सूर्यस्यसंक्रांतिकालआगतः ततउभयत्रपूर्वतःपरतश्चषोडशषोडशनाड्योघटिकाःपुण्यसंपादकत्वात्पुण्यामताः वृद्धवसिष्ठोक्तेः संक्रांतेःप्राक्प
रतश्चसार्द्धाःषोडशनाडिकाःत्रयस्त्रिंशत्संक्रमस्यपुण्याःसर्वेस्यनाडिकाः अनेनसंक्रांतेःपुण्यकालस्तुषोडशोभयतःकलाइतिस्मृतिवाक्येपूर्वतः
परतश्चाष्टौअष्टौघटिकाइत्येवंषोडशेतिव्याख्यातंतत्रपाक्षतंभवति सूर्यसिद्धांतेपि अर्कमानकलाःषष्ट्यागुणितामुक्तिभाजिताःतदर्धेनाड्यःसं
क्रांतेरर्वाक्पुण्यंतथापरेइति अयनिशीथतरति निशीथुतोर्धरात्रात् अर्वाक्पूर्वंपरत्रपश्चाद्वसंक्रांतिकालेसति पूर्वापराहांतिमपूर्वभागयोः
पूर्वापरयोरह्नोःक्रमेणांतिमपूर्वभागयोरुभयत्रषोडशषोडशघटिकाःपुण्याइतिपूर्वेणसंबंधः अयमर्थः यद्यर्धरात्रात् प्राक्संक्रांतिस्तदापूर्व

श्रीगणेशायनमः अथसंक्रांतिप्रकरणंव्याख्यायते तत्रभानोराशितोपरराशौ संक्रमणंनाम गमनंसंक्रांतिस्तस्याः नक्षत्रविशेषवशेन वारवशेनचसं ज्ञाफलंचसार्धवसंततिलकेनाह घोरार्केति विप्राग्न्येति अर्कसंक्रमणमर्कसंक्रांतिः उग्ररवौ उग्रनक्षत्रेषु रविवारे चेत्स्यात्तदाघोरेतिसंज्ञा साशूद्रा न्सुखयेत् सुखमुत्पादयेत् उग्ररवाविति उग्रैः सहितोरविः उग्ररविः तस्मिन्नुग्ररवाविति मध्यमपदलोपितत्पुरुषः ततःसप्तम्येकवचनं अथवा समाहारद्वंद्वे अनित्यमागमशासनमिति नुमभावः एवंलघुविधावित्यादिष्वपि समाधेयं अथलघुनक्षत्रेषु विधौ सोमवारे सूर्यसंक्रांतिर्ध्वां क्षीनाम्नी विशो वैश्यान्सुखयेत् चरर्क्षभौमे चरनक्षत्रे भौमवारे वा सूर्यसंक्रमणं चेन्महोदरयुता महोदरी संज्ञका चोरान्सुखयेत् ज्ञमैत्रे बुध वारे मैत्रसंज्ञनक्षत्रेषु वार्कसंक्रांतिर्मंदाकिनीनाम्नी नृपतीन्राज्ञः सुखयेत् स्थिरगुरौ स्थिरनक्षत्रेषु गुरुवारे चार्कसंक्रांतिर्मंदाख्या विप्रान्ब्रा

घोरार्कसंक्रमणमुग्ररवौ हि शूद्रान्ध्वांक्षी विशो लघुविधौ च चरर्क्षभौमे चोरान्महोदरयुता नृपतीन् ज्ञमैत्रे मंदाकिनी स्थिरगुरौ सुखये
च्च मंदा १ विप्रांश्च मिश्रभभृगौ तु पशूंश्च मिश्रा तीक्ष्णार्कजे त्वपजसुखा खलु राक्षसी च अंशे दिनस्य नृपतीन्प्रथमे निहंति मध्ये द्विजा
नपि विशोऽपरके च शूद्रान् २ अस्ते निशाप्रहरकेषु पिशाचकारीन्नक्तंचरानपि नटान्पशुपालकांश्च

ह्मणान्सुखयेत् मिश्रभे गौमि श्रनक्षत्रयोः भृगुवारे वार्कसंक्रांतिर्मिश्रानाम्नी पशून्सुखयेत् तीक्ष्णार्कजेति तीक्ष्णसंज्ञकनक्षत्रेषु अर्कजे शनिवारे वा राक्षसी नाम्नी अंत्यजसुखा अंत्यजान् चांडालान् सुखयतीति अंत्यजसुखा स्यात् १ अथ दिनरात्रिविभागेन संक्रांत्यशुभफलं उत्तरायणदक्षिणायनसंज्ञां च सार्धवसंततिलकयाह अंशे इति अस्ते इति अत्रार्कसंक्रमणमित्यनुवर्तते दिनमाने त्रिभिर्भक्ते त्र्यंशो भवति तत्र दिनस्य प्रथमे त्र्यंशेऽर्कसंक्रमणं नृपतीन्हंति मध्ये द्वितीयत्र्यंशे द्विजान्ब्राह्मणा न्हंति अपरके तृतीये त्र्यंशे वैश्यान्हंतीत्येवं सर्वत्र व्याख्येयं अस्ते सूर्यास्तसमयेऽर्कसंक्रमणं शूद्रान्हंति २ अथ रात्रिसंक्रांतिफलं रात्रिप्रथमप्रहरे पि शाचकान् आदिशब्देन भूतान् द्वितीयप्रहरे नक्तंचरान् राक्षसान् तृतीयप्रहरे नटान्नर्तकान् चतुर्थप्रहरे पशुपालकान् आभीरान् सूर्योदयसमका लेऽर्कसंक्रमणं सकललिंगिजनं पाखंड्यादिकं हंतीत्यर्थः पाखंडाः सर्वलिंगिजन इत्यभिधानात् क्रूरसौम्यवारपरत्वेन फलमाह वसिष्ठः ॥

मु॰ टी॰ सं॰ प्र॰ ३८

38

ततसंध्यामतिक्रम्य मकरसंक्रांतिस्तदोत्तरदिन एव पुण्यकालो न पूर्वदिने एवं पशुदयसंध्यायां कर्कसंक्रांतिस्तदा सूर्योदयानंतरमेव पुण्यकालो
न प्राग्दिने यदुदयसंध्यातः प्राक् कर्कसंक्रमस्तदा प्राग्दिन एव पुण्यकालो नोत्तरदिने इति निष्कृष्टोऽर्थः अथ रात्रौ स्नानं न कुर्वीत तदानं चैव वि
शेषत इति रात्रौ स्नानदानादिनिषेधेपि नैमित्तिकं तु कुर्वीत स्नानं दानं च रात्रिष्विति तु मनुवाक्यशेषात् सुतजनने संक्रांतावुपरागे सूर्यचंद्रयोर्नित्यं रा
त्रावपि कर्तव्ये स्नानदाने विशेषतो नृणामिति वसिष्ठवचनात् राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु स्नानदानादिकं कार्यं निशि काम्यव्रतेषु चे
ति रात्रौ संक्रमणे रात्रौ स्नानं प्राप्तं तत्र कर्कमकरसंक्रांतौ स्नानदानादौ देशप्रसिद्धशिष्टाचारेण व्यवस्थावगंतव्या तत्र गौर्जरास्तु ग्रहणवदयन द्व
ति स्वीयसूत्रे स्नानदाने ग्रहणवत्सौम्ययाम्यायनद्वय इति कश्यपसंहितोक्तं चानुसृत्य रात्रावयनसंभवे सति रात्रावेव स्नानादिकं कुर्वंति दाक्षिणात्या

चेद्याम्यसौम्ये त्वयने क्रमात्स्युः पुण्यौ तदानीं परपूर्वघस्रौ ७ ॥
याम्यायने विष्णुपदे चाद्या मध्यास्तुलाजयोः ॥ ० ॥ श्रीरामः

स्तु कार्मुकं तु परित्यज्य झषं याति दिवाकरः इत्यादि भविष्योत्तरादिवाक्यमंगीकृत्य दिवस एव स्नानादिकं कुर्वंति तत्रापि नारदोक्तसंध्याकालसंक्र
मे विशेषो ज्ञेय इत्यलं ७ अथ पूर्वपराः षोडश घटिकाः पुण्या इति पूर्वं सामान्येनोक्तमिदानीं विष्णुपदादिविशेषमनुष्टुभाह याम्यायन इति कर्कसं
क्रांतौ विष्णुपदे वृषसिंहवृश्चिककुंभसंक्रांतिषु संक्रांतिकालादाद्याः प्रथमाः षोडश घटिकाः अतिपुण्यदाः स्नानदानादौ अनंतपुण्यदा ज्ञेयाः रम॰ ३८
अग्रिमास्तु न तथा तुलाजयोः तुलामेषयोः मध्या उभयतः षोडश घटिकाः संक्रांतिकालात्प्रागष्टौ परतश्चाष्टाविति दीपिकाकारो व्याख्यातं
यदुक्तं गुरुणा वर्तमाने तु लामेषे नाड्यस्तूभयतो दश इति मध्यमा तत्रीयां शाभिप्रायेणेति ज्ञेयं तथा षडशीत्यानने मिथुनकन्याधनुर्मीनसंक्रा

दिनस्य उत्तरार्धे पुण्यं यद्यर्धरात्रादपरि संक्रांतिस्तदोत्तरदिनस्य पूर्वार्द्धमेव पुण्यमित्यर्थः ५ अथार्धरात्रसंक्रमणे मकरकर्कटयोरपि विशेषमुपजातिकयाह पूर्णेइति पूर्णे निशीथे अर्धरात्रे यदि संक्रमः स्यात्तदा दिनद्वयं पूर्वदिनं परदिनं च पुण्यमुक्तं उक्तंच यद्यर्धरात्र एव स्यात्संपूर्णे संक्रमे रवेः तदा दिनद्वयं पुण्यं स्नानदानादिकर्मसु अथेति अथानंतरमुदयास्तात् सूर्योदयात्सूर्यास्ताच्च पूर्वं परस्ताच्च यदि याम्यसौम्यायने कर्कमकरसंक्रांती भवतः तदा पूर्वं दिने पुण्ये स्यातां अयमर्थः सूर्योदयात्पूर्वं कर्कसंक्रमणं स्यात्तदा पूर्वदिन एव पुण्यकालो नोत्तरदिने तथा यदि सूर्यास्तानंतरं मकरसंक्रांतिः स्यात्तदोत्तरदिन एव पुण्यकालो न पूर्वदिने गार्ग्यः यदास्तमानवेलायां मकरं याति भास्करः प्रदोषे चार्धरात्रे वा स्नानं दानं परेहनि अर्धरात्रे तथैवास्तं संक्रांतौ दक्षिणायने पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविरिति वाक्यार्थः प्रदोषलक्षणं स्कांदे त्रिमुहूर्तः प्रदोषः स्याद्भानावस्तंगते सतीति ६ अथोदयास्तादिति वचनस्या

निशीथतोर्वागपरत्र संक्रमे पूर्वापराहांतिमपूर्वभागयोः ५ पूर्णे निशीथे यदि संक्रमः स्याद्दिनद्वयं पुण्यमथोदयास्ता
त् पूर्वं परस्ताद्यदि याम्यसौम्यायने दिने पूर्वपरे तु पुण्ये ६ संध्या त्रिनाडीप्रमितार्कबिंबादर्धोदितास्तादध ऊर्ध्वमत्र ॥

पद्यार्धमिंद्रवज्रयाह संध्येति अर्कमंडलादर्धोदितादर्धास्ताच्चाध ऊर्ध्वं क्रमात्त्रिभिर्नाडीभिर्मिता संध्या संध्याकालः स्यात् अर्धोदितार्कबिंबात्पूर्वं त्रिनाडीमिता प्रातःसंध्या तथार्धास्तार्कबिंबादुपरि त्रिनाडीमिता सायंसंध्येत्यर्थः तत्प्रयोजनमाह अत्रेति अत्र प्रातःसंध्यायां सायंसंध्यायां च क्रमात् याम्यसौम्यायने स्तः तदानीं परपूर्वदिवसौ पुण्यौ यदि प्रातःसंध्यायां दक्षिणायनप्रवृत्तिः तदा सूर्योदयानंतरं संपूर्णमहः पुण्यं तथा यदि सायंसंध्यायामुत्तरायणप्रवृत्तिस्तदा सूर्यास्तात्पूर्वं संपूर्णमहः पुण्यं स्यादित्यर्थः तदाह नारदः सूर्यास्तमनसंध्यायां यदि सौम्यायनं भवेत् तदोदयादहः पुण्यं पूर्वाहः पूर्वतो यदीति उदयसंध्यास्तसंध्ययोर्लक्षणं तत्रैव अर्धोदितास्तमनात्संध्या घटिकात्रयसंमिता तथैवार्धोदयात्प्रातर्घटिकात्रयसंमितेति एवं सत्यर्कबिंबस्यार्धास्ताद धोदयाद्धाक्रमात्प्रत्यात्मकं त्रिघटिमितास्तसंध्योदयसंध्याबोध्यते तत्रास्तसंध्यायां यदि मकरसंक्रमः स्यात्तदा दिन एव पुण्यकालो नोत्तरदिने यदा

मु॰ टी॰
सं॰ ग्र॰
३९

ईश्वरेच्छालोकादृष्टवशात्तद्राश्यादिभागस्थसूर्यतेजःसंपर्कः स्थूलसंक्रमः मंडलसंक्रमश्च राशिसंक्रम इति विषयविवेकः तत्र निरयनगणनयैव स्स्
कालव्यवहारः साध्यः सायनगणनानुनियतविषयैव अयनांशैः अज्ञानव्यालग्रेक्रांतौ चरागमे विनिभेस्तु निभेपातेतथाहृष्क्रमेपातयोरिति ९
वंद्व्योरपिमानयोरसंकीर्णो व्यवहार इति सर्वमनाकुलं पुण्यकालस्तु मेषविषसंक्रमेऽपि ज्ञेयः पूर्वलिखितवाक्यस्वरसात् ९ अथ संक्रां
त्युपयोगाज्जघन्यबृहत्समनक्षत्राण्युपजात्याह समिति मृदुक्षिप्रवसुश्रवोग्निमघानि पूर्वोत्तरपंभसमं अत्तपंभमूलः स्तानि पंचदशभानि स
मसंज्ञानि ज्ञेयानि ध्रुवद्विदैवादितिभं बृहत्स्यात् ध्रुवादि षड्भानि बृहत्संज्ञकानि सार्पाबुपार्द्रानिलशाक्रयाम्यं जघन्यं स्यात् आश्लेषादि षट्

मेषादितः प्राक्चलसंक्रमाः स्युर्दानेजपादौ बहुपुण्यदास्ते ८ समं मृदुक्षिप्रवसुश्रवोग्निमघानि पूर्वोत्तरपंभं बृहत्स्यात् ध्रुवद्विदै
वादितिभं जघन्यं सार्पाबुपार्द्रानिलशाक्रयाम्यम् १० जघन्यभे संक्रमणे मुहूर्ताः शरेंदवो १५ बाणकृता ४५ बृहत्सु खरामसं ३० स
ख्या समभे महर्घं समर्घसाम्यं विधुदर्शनेपि ११ अर्कादिवारे संक्रांतौ कर्कस्याद्विशोपकाः

भानि जघन्यसंज्ञानि ९ अथ संक्राम
योजनमुपेंद्रवज्रयाह जघन्यभे इति जघन्यनक्षत्रेऽर्कसंक्रमणे पंचदशमुहूर्ता ज्ञेयाः बृहन्नक्षत्रेऽर्कसंक्रमणे बाणकृताः पंचचत्वारिंशन्मुहू
र्ता ज्ञेयाः समनक्षत्रेऽर्कसंक्रमणे खरामसंख्याः त्रिंशन्मुहूर्ता ज्ञेयाः उक्तं च नारदेन तासां प्रमाणं घटिकास्त्रिंशद्भवति वस्तुय इति फलमाह महर्घे राम॰
समर्घसाम्यमिति पंचदशमुहूर्ता यां संक्रांतौ सर्वमन्नं महर्घं दुष्प्राप्यं भवति पंचचत्वारिंशन्मुहूर्ते संक्रांतौ समर्घं त्रिंशन्मुहूर्ता यां संक्रांतौ समं यथा ३९
स्थितं भवति विधुदर्शनेपीति चंद्रदर्शनेप्येवमेव फलं वाच्यं अयमर्थः जघन्यभे चंद्रदर्शने महर्घं बृहन्नक्षत्रे चंद्रदर्शने समर्घं समभे चंद्रदर्शने
साम्यं ११ अथ प्रसंगात् कर्कसंक्रांतौ मेघविंशोपकाननुष्टुभाह अर्कादीति कर्कसंक्रांतौ अर्कादिवारे सति एते अब्दविंशोपका ज्ञेयाः यथा

न्निषु सौम्येयने मकरसंक्रांतौ च संक्रांतिकालात्पराऽस्त्रिमषोडशघटिकाश्चतिपुण्याः प्रथमास्तु न तथा एवं निर्णीते तत्पुण्यकाले स्नानाद्यवश्यं विधेयं
तत्र स्नानाद्यकुर्वन्नशन्यवायमाह वसिष्ठः विषुवत्त्ययने ग्रहणं संक्रांतौ पुण्यदिवसे वा पितॄन्तर्पितं न करोति हि इत्वाशायं व्रजति तस्य पिता षडशीत्यां तु य
द्दानं विषुवद्द्वये दृश्यते सागरस्नाततत्स्नानं नैव दृश्यत इति भरद्वाजोक्तेः अयं च निर्णयः षडशीत्यादीनामपि संक्रमे ज्ञेयः तत्र हेमाद्रौ कालनिर्णये कालादि
भिः याः पुण्यकालघटिका उपनिबद्धास्ताः स्थूलाः तेन षष्टिघ्ना विंवग्रहभुक्तिभक्तमित्यादिप्रकारेण ग्रहमध्यमभुक्तिमध्यमविंबैरानीताः सूक्ष्मा घटिका
लिरूपेण ते स्फुटमतिस्फुटविंबैश्चेत्साध्यंते तान्यतिसूक्ष्मास्तासामतिपतनत्वात् श्लोकं श्वेतुपतितवधमध्यमास्तु यथा नाड्यो रामगुणा ३३ रवेरयविधोः ष
ड्ढोः पलैर्युक्तद्वयं ४।२६ भौमस्याब्धिपलैर्युता नव ९।४ विदो युक्ताः पलैः खाब्धिभिः षड्नाड्यो ६।४० वगजा ८८ गुरोरथभगोनेशाः पलैरष्टभिः ९

षडशीत्याननेसौम्ये पराना ज्योतिपुण्यदाः तथायनांशाः स्वरसाहतांश्च सपार्के गताविहताहिनाद्यैः

१८ गुराखाः स्तुःखनगाः १६० शनेर्हभयनीरास्त्वयोः संक्रमेरिति ८ निरयनांशसंक्रांतिमभिधायेदानीं सायनांशसंक्रांतिसपुण्यकालमुपजात्याह त
थेति यथा राशिसंक्रमा बहुपुण्यदास्तथा चलसंक्रमा अपीति भवाहित लघ्वाशयः अयनांशाः वृष्याः गुण्याः स्व स्तग्वेगगत्याविहताल्ब्धै
र्दिनाद्यैरित्यैटीपलैः रुत्वा मेषादिद्वादशसंक्रमाः स्युस्ते चलसंक्रमा दाने जपादौ जपश्चाद्दोमादौ बहुपुण्यदा भवन्ति पुलस्त्यः अयनांशसंस्थितो
भानुर्गोले चरति सर्वदा अमुष्याराशिसंक्रांतिस्तुल्यः कालविधिस्तयोः स्नानदानजपश्राद्धव्रतहोमादिकर्मभिः सुकृतं चलसंक्रांतावक्षयं पुरु
षाश्नुत इति जाबालिरपि संक्रांतिपुण्यकालस्तदीयेप्ययने तथा अयने विंशतिः पूर्वा मकरे विंशतिः परेति अत्र मकरायणे पूर्वा विंशतिर्घटि
काः पुण्याः मकरसंक्रांतौ तु परा विंशतिर्घटिकाः पुण्यकालः मकरव्यतिरिक्तेकाद्यसंक्रांतिषु तत्तत्संक्रमवत् पुण्यकालो ज्ञेयः अयनांशानय

नाडिविचारः सिद्धांतादवगंतव्याः ॥

गुरुः नेत्रयोर्दक्षिणद्वारं भद्रायां पश्चिमाभिमुखं जयायामुत्तरद्वारं पूर्णायां पूर्वं ततोऽविशेषादिति ५ अथ प्रवेशकलशचक्रं शार्दूलविक्रीडितेनाह वक्त्रे भूरि
ति गृहप्रवेशसमय इति सर्वत्रापि संबध्यते कुम्भे कलशाकृतिवास्तोर विभाव्य सूर्याक्रान्तनक्षत्रात्स्वप्रलोपे पञ्चमी रविभमारभ्य कमलशास्यमुखे भूरे
कसंख्याकानक्षत्रमेव स्थाप्यं तत्फलं गृहस्याग्निदाहः ततः सप्तभान्कृताः अग्रिमाणि चत्वारि भानि प्राच्यां स्थाप्यानि फलमुद्वसनं जनवासशून्यं
स्यात् ततः कृता यमगताः तदग्रिमाणि चत्वारि भानि दक्षिणे स्थाप्यानि फलं गृहपतेर्लाभः द्रव्यप्राप्तिः ततः कृताः पश्चिमे तदग्रिमाणि चत्वारि भानि
पश्चिमायां स्थाप्यानि फलं गृहपतेः श्रीप्राप्तिः ततो वेदा उत्तरे तदग्रिमाणि चत्वारि भानि उत्तरस्यां स्थाप्यानि फलं कलिः लोकैः सह गृहसंबन्धी निर्ब
कोवादः झकटः कस्मात् ततो युगमितास्तदग्रिमाणि चत्वारि भानि गर्भे कलशमध्ये स्थाप्यानि फलं विनाशो गर्भस्य वंशस्य: ततो रामास्तदग्रिमाणि

वक्त्रे भूरविभात्प्रवेशसमये कुम्भेऽग्निदाहः कृता प्राच्यामुद्वसनं कृता यमगता लाभः कृताः पश्चिमे श्रीर्वेदाः कलिरुत्तरे
युगमिता गर्भे विनाशो गुदे रामाः स्थैर्यमतः स्थिरत्वमनलाः कण्ठे भवेत्सर्वदा ८॥

त्रीणि भानि गुदे बुध्ने स्थाप्यानि फलं स्थैर्यं गृ
हपतेर्बहुकालेन तत्र निवासः ततोऽनलास्तदग्रिमाणि त्रीणि भानि कण्ठे स्थाप्यानि फलं स्थिरत्वं गृहपतेर्भवेत् एवमभिहितानि सप्तविंशतिभानि सु:
ज्योतिःप्रकाशोक्तं वेदपञ्चकं त्रिस्त्रिः १।४।४।४।४।३।३ प्रवेशकलशोऽर्कभात् मृतिर्गतिर्धनं श्रीः स्याद्वैरं सुतु क्लिष्टता सुखमिति अत्र कलशचक्रे
शुभफलस्थानपतितमेव विहितनक्षत्राणां परिग्रहो युक्तः तत्रापि यदि अभुक्ते प्रवेशविधिः स्थिते तेन हि अभुक्तेन नक्षत्रेण परिग्रहः यथा पूर्वस्यां प्रवेशविधि।
स्थिते रोहिणी मृगो वा ग्राह्याः दक्षिणमुखगृहप्रवेशे उत्तराफाल्गुनी चित्रा एव पश्चिमाभिमुखे अनुराधोत्तराषाढे एव उत्तराभिमुखे उत्तराभाद्रप
दा रेवत्यौ ग्राह्ये इति निष्कृष्टोऽर्थः अत एवोक्तं वसिष्ठेन यद्दिग्द्वारं मन्दिरं तद्दिग्भैः सह कर्तुः स्यात्संनिवेशो न सर्वैरिति तद्दिग्भैरित्येतयोः स
मानाधिकरण्येनान्वयः भिन्नवाक्यत्वेन तत्काङ्क्षा [illegible] मुखस्य प्रवेशे नवमन्दिरं प्रविशेत् अथ त्रयात

मु०टी० क्तानिवेदवाक्यविलसद्बुद्धिः तर्कोन्यायशास्त्रं अलंकृतिरलंकारशास्त्रं वेदवाक्यं वेदवाक्यविचारप्रतिपादको ग्रंथो मीमांसाशास्त्रं वेदांतशास्त्रं च ते
मू०प्र० षु विलसन्ती विलासयुक्ता बुद्धिर्यस्य सः ८ अथ क्रमप्राप्तं तातवर्णनं तेनैव वृत्तेनाह ज्योतिर्विदिति तत्सुतुल्यचिंतामणिदैवज्ञस्य तु पुत्रोऽनंत इ
१२० तिनाम्ना प्रथां ख्यातिमधिगतः प्राप्त आसीत् कीदृशः ज्योतिर्विद्गणवंदितांघ्रिकमलः ज्योतिर्विदां गणेन समूहेन वंदिते चरणकमले यस्य सः पुनः की
दृशः भूमंडलेऽहस्करः ब्रह्मध्यापनद्वारा प्रकाशकत्वसाधर्म्यं पुनः कीदृशः कृती कुशलः ग्रंथकरणसमर्थ इति शेषः ग्रंथकर्तृत्वमेवोत्तरार्द्धेन प्रकाशयति यो
रम्यामिति रम्यां जनिपद्धतिं जातकपद्धतिं दुष्टाशयध्वंसिनी दुष्टाः जन्मपद्धतिमार्गे संप्रदायानभिज्ञास्तेषामाशयमभिप्रायं ध्वंसयति इति दुष्टाशयध्वं

तत्तज्जातकसंहितागणितकृन्मान्यो महाभूभुजां तर्कालंकृतवेदवाक्यविलसद्बुद्धिः स चिंतामणिः ८ ज्योतिर्विद्गणवंदितां
घ्रिकमलस्तत्सूनुरासीत्कृती नाम्नानंत इति प्रथामधिगतो भूमंडलाहस्करः यो रम्यां जनिपद्धतिं समकरोद्दुष्टाशयध्वंसिनी
टीकां चोत्तमकामधेनुगणितेऽकार्षीत्सतां प्रीतये ९ तदात्मज उदारधीर्विबुधनीलकंठानुजो गणेशपदपंकजं हृदि
निधाय रामाभिधः गिरीशनगरे वरे भुजभुजेषुचंद्रै १५२२ र्मिते शके विनिरमादिमं खलु मुहूर्तचिंतामणिं १० इति श्रीदै
वज्ञरामविरचितं मुहूर्तचिंतामणिं समाप्तिमगमत् ११

१२०

स्विनीनामकरोत् तथा उत्तमेत्युत्तमे ब्रह्मपक्षार्थपक्षप्रतिपादके [illegible] कामधेनुगणिते ग्रंथविशेषे टीकां च सतां प्रीतयेऽकार्षीत् कृतवानित्यर्थः ९ अथ स्वनामक
थनपूर्वकं ग्रंथसमाप्तिं पृथ्वीछंदसाह तदात्मज इति तस्य ... तस्यात्मजो रामाभिधो गिरीशनगरे वाराणस्यां मुहूर्तचिंतामणिं मुहूर्तचिंतामणिना
मधेयं ग्रंथं भुजभुजेषुचंद्रैः १५२२ मिते शाके द्वाविंशत्यधिकपंचदशशतमिते शाके विनिरमात् अकार्षीत् शेषं स्फुटं १० इति श्रीदैवज्ञानंतसु
तदैवज्ञरामविरचितायां स्वकृतमुहूर्तचिंतामणिटीकायां प्रमिताक्षरायां गृहप्रवेशप्रकरणं चतुर्दशं संपूर्णं समाप्तं ॥ ॥ ॥ ॥

